यदि पु···(p. 41) up to the end. The original MS. is noted in Burnell's Catalogue (No. 4850) where the name of the work is given as *Rasaratnadīpikā*. It contains 18 sheets and has 10 to 14 lines to a page. The extent is 324 granthas and the MS. is in fairly good condition.

A comparison of these MSS. shows that they clearly fall into two groups: 1) P, and 2) BTp. The relationship between T and p is very close. The fact that, in both T and p, the text after यदि पुनर्बहुषु···(p. 41) is lost, is also significant. Both these MSS. agree substantially with B. There are the same scribal errors in these three MSS. The readings of BTp are often better than those of P.

# रसरत्नप्रदीपिका-विषयानुक्रमणिका।

श्रीमदल्लराजप्रणीता

# रसरत्नप्रदीपिका ।

श्रीगणपतये नमः ।

आनन्दाय निरन्तराय महते ज्ञानाय विश्वात्मने
नित्यायाक्षततेजसे सुमहतां गम्याय वै योगिनाम् ।
नानाकारविधायिनेऽप्यविकृताकाराय चित्तान्तरे
प्रोन्मीलद्रसरूपिणे भगवते तस्मै परस्मै नमः ॥ १

आसीत् कोङ्कणभूमिपाल[1]मुकुटव्याकीर्णरत्नावली-
ज्योत्स्नाविच्छुरितांघ्रिपद्मयुगलः क्ष्मापालचूडामणिः ।
प्रोस्फूर्जत्प्रबल[2]प्रतापतपनप्रक्रान्तलोकत्रयः
श्रीहम्मीरमहीपतिर्वितरणप्रख्यातकीर्तिः सदा ॥ २

शास्त्राणां पारदृश्वा प्रबलभुजबलोत्क्षिप्तवैरीन्द्रवृन्दः
शश्वन्माणिक्यमुक्ताकनकवितरणैः पूरिताशः कवीनाम् ।
दिक्प्रान्तख्यातकीर्तिः[3] सकलगुणनिधिः प्रौढकन्दर्पमूर्ति-
र्नारीणां चित्तजन्मा नृपमुकुटमणिः शुद्धवंशप्रदीपः ॥ ३

लक्ष्मीकेलिनिकेतनं च विदुषां विश्रामभूमिः परा
वाग्देवीसुहृदालयं सुविपुलं धर्मस्य मुख्यायनम् ।
नानाकौतुककारणं रसतरोर्बीजं कलाजन्मभू-
स्तस्मादल्लमहीपतिः समभवद् धीराग्रणीर्वीरहा ॥ ४

काश्यपं कोहलं चैव मतङ्गं दन्तिलं[4] तथा ।
विशाखिलं[5] च माहेशं नान्द्यं[6] गिरिसुतामतम् ॥ ५

नारदं तुंबरुं[7] चैव अर्जुनं[8] रावणोदितम् ।
पूर्वाचार्यैर्विरचितं नाट्यार्णवमथापि च ॥ ६

नाट्यालोचनमानन्दवर्धनं भरतोदयम् ।
भावप्रकाशनं चैव तथा शृङ्गारसागरम् ॥ ७

---

१ P आसीद्गर्वितभूमि.° २ P विस्फूर्जत्प्रबल°. ३ P दिक्षु प्रख्यात°. ४ P मतिलं.
५ P विशाखिनं. ६ Mss नाद्यं (?). ७ P तौंबरं. ८ P आर्जुनं.

इत्थमालोक्य[1] शास्त्राणि विविधानि सुबुद्धिमान् ।
करोति रसिकस्यार्थे रसरत्नप्रदीपिकाम् ॥ ८

संसारेऽस्मिन् सुखं ग्राह्यं दुःखं हेयमिति स्थितिः ।
अतस्तु सुखमूलं हि दुःखमिच्छन्ति[2] नेतरत् ॥ ९

सुखं द्विधेव कथितं नित्यानित्यविभेदतः ।
नित्यं ब्रह्मस्वरूपं हि अनित्यं विषयोद्भवम् ॥ १०

केवलं योगिभिर्गम्यं ब्रह्मानन्दमयं विदुः ।
प्रचारो विरलस्तस्य लोकेऽस्मिन् विषयोन्मुखे ॥ ११

यत्सुखं विषयोत्थं हि नानारुचिसमाश्रयम् ।
तदेव बहुधा भिन्नं प्रान्ते नैवातिसुन्दरम् ॥ १२

रसरूपं सुखं यत्तु तद् द्वयोरपि मध्यमम् ।
अनिर्वाच्यतया यत्तु पूर्वाचार्यैर्निरूपितम् ॥ १३

तस्मादसारे संसारे साररूपो रसो मतः ।
यत्र प्रीतिः सुविपुला वर्धते च दिने दिने ॥ १४

प्रत्यक्षा इव दृश्यन्ते यत्र रामादयोऽपि च ।
पारिजाततरुच्छायामास्थिताः[3] किंनरस्त्रियः ॥ १५

सुरवाराङ्गना यत्र नृत्यन्ते भावभूषिताः ।
विजृम्भमाणकिरणविस्फुरद्रत्नभूमयः ॥ १६

एवं नियुद्धं सुचिरं[4] शरपातभयंकरम् ।
असत्प्रत्यक्षतामेति संस्रवच्छोणिताकुलम्[5] ॥ १७

इत्थं विचित्रा भावास्तु हर्षोत्कर्षप्रदायिनः ।
निमज्जयन्ति मनुजान् निस्सीम[6]सुखसागरे ॥ १८

रसस्य फलमिच्छन्ति मुनयः पुण्यमेव च ।
यतो रसेन तृप्यन्ति रसस्था देवताः शुभाः ॥ १९

शृङ्गारो विष्णुदेवः स्याद् हास्यः प्रमथदैवतः ।
रौद्रो रुद्राधिदेवस्तु करुणो यमदैवतः ॥ २०

बीभत्सश्च[7] महाकालः कालदेवो भयानकः ।
वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥ २१

---

१ P इमान्यालोक्य. २ P पुण्यमि°. ३ P °च्छायासंश्रिताः. ४ P युद्धं च. ५ P स्रवन्त्यः शोणिताकुलाः. ६ P हृदयं निस्सीम°. ७ Mss read बीभत्सस्य.

तृप्ते तु परमे पुंसि पुण्यमिष्टं[1] प्रजायते ।
आरब्धे तु रसे यत्तु सुखं तत्रानुषंगिकम् ॥ २२

दाने मुख्यं फलं पुण्यं कीर्तिस्तत्रानुषंगिकी ।
यथा तथा रसे पुण्यं मुख्यं प्रासंगिकं सुखम् ॥ २३

नाट्यारूढै रसैरेतैस्तृप्तिर्भवति चाक्षुषी ।
देवानां यज्ञतस्तृप्ती रसनेन्द्रियगोचरा[2] ॥ २४

तथाह भरतः ।

धर्मादिसाधनं नाट्यं सर्वदुःखापनोदकम्[3] ।
अनुसेवध्वमृषयस्तत्साधूयं[4] तु नाटकम् ॥ २५

इति श्रीमन्महाराजाधिराजश्रीहम्मीरराजात्मजश्रीमदल्लराजविरचितायां[5][6]
रसरत्नप्रदीपिकायां रसप्रशंसा नाम प्रथमः परिच्छेदः ॥ १ ॥



अथ प्रतिपद्यमाने रसे भावस्य मुख्यतया प्रथमतो भावस्य लक्षणमाह ।

चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति ।
ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् ॥ १

विकृतेः कारणं भावस्याभिव्यक्तिः[7] । नन्वस्य भावसंज्ञा कथमित्याह ।

वागङ्गमुखरागेण सान्त्वनाभिनयेन च[8] ।
कवेरन्तर्गतं[9] भावं भावयन्भाव उच्यते ॥ २

अन्तर्गतं[9] भावं बहिर्भावयन् सद्रूपतामानयन्[10] इति । अन्तर्भावशब्दोऽभिप्रायवाची । भावयन् इति भावशब्दः सत्तावाची । ननु चित्तस्य विकृतिर्भाव इत्युक्तम् । सा विकृतिः किंविधा कतिप्रकारेत्याह[11] ।

आनन्दरूपा विकृतिः सा चतुर्धा निगद्यते ।
विकासविस्तरक्षोभविक्षेपैः[12] किंचिदुत्थितैः[13] ॥ ३

आनन्दरूपा इति । काव्यनाटकादिसमुद्भूतैव आनन्दरूपा । किंचिदुत्थितैः[13] इति । विकासविस्तरक्षोभविक्षेपा भावे किंचिदुत्थिता[14] भवन्ति रसे पुनः सम्यक् ।

---

१ P पुण्यमित्थं. २ B रसेनेन्द्रिय°. ३ B °दुःखापनोदकृत्. ४ P °षयस्तस्योत्थानं. ५ P B om श्रीमन्महाराजाधिराजश्रीहम्मीरराजात्मज°. ६ B om श्रीमदल्लराजविरचितायां. ७ P °भिवक्तव्यः. ८ P B read वाग्भिरङ्गैर्मुखरसैः यः सत्त्वाभिनयेन च. ९ B om from अन्तर्गतं up to सत्तावाची. १० P तद्रूपता°. ११ B किंप्रकारे°. १२ B विकाशविस्तर°. १३ P °दुच्छ्रितैः. १४ P °दुच्छ्रिता.

अथ स्थायिभावस्य सामान्यलक्षणमाह ।

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥ ४

यथा मालतीमाधवे माधवस्य मालतीरतेः श्मशानांकप्रतिपादितेन विरुद्धेनापि बीभत्सरसेन विच्छेदो न स्यात् ।

अथ स्थायिभावभेदानाह ।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावा प्रकीर्तिताः[१] ॥ ५

एषु शृङ्गारादयो रसा वक्ष्यन्ते ।

यावन्तश्च रसाः प्रोक्ताः तावन्तः स्थायिनो मताः ।
शान्ताभावात् स्थायिभावो भरते कथितो न हि ॥ ६
नाटकेऽभिनयो नास्ति शान्तस्य व्यभिचारिभिः ।
अन्येषां तु कुतः शक्तिः शान्तस्य परिपोषणे ॥ ७
अङ्गीकुर्वन्ति चेत् केचिद्रसं शान्तं मनीषिणः ।
करिष्ये कथनं तस्य[२] रसानां प्रविचारणे ॥ ८
रत्यां हासे विकासः स्याद् विस्तारः कथितः पुनः ।
उत्साहे विस्मये क्षोभो भये चैव जुगुप्सिते ।
विक्षेपः कथितः क्रोधे शोके च सुविचक्षणैः ॥ ९

अथ रत्यादीनां प्रत्येकं लक्षणमाह ।

स्मृते दृष्टे श्रुते स्वल्पा या चित्ते विकृतिर्भवेत् ।
अभीष्टे वस्तुनि प्रायः सा रतिः परिकीर्तिता ॥ १०

यथा विक्रमोर्वश्यां सखीदर्शनसमुत्सुकामुर्वशीं प्रति पुरूरवसो वचनम् ।

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः ।
त्वया विना सोऽपि भवेत्समुत्सुकः
सखीजनस्ते किमु रूढसौहृदः ॥ ११

इत्यादि स्वयमुत्प्रेक्ष्यम्[३] ॥

अथ हासस्य लक्षणमाह ।

बालकादिवचोवेषवैषम्यजनिता हि या ।
चेतसो विकृतिः स्वल्पा स हासः कथितः खलु ॥ १२

---

१ After this P ins stanza no. 9, numbering it 6; in P, st. यावन्तश्च etc. is numbered 7, नाटकेऽभिनयो etc. 8, and अङ्गीकुर्वन्ति etc. 9. २ B तेषां.
३ P °मुत्प्रेक्ष्य.

यथा कविकंकणस्य ।

अव्यक्तवर्णानि मनोहराणि
निरर्थकानि क्षणविस्मृतानि ।
ध्रुवं शिशूनामसमञ्जसानि
वचांसि हास्यं जनयन्ति पुंसाम् ॥ १२

अथ शोकस्य लक्षणमाह ।

इष्टवस्तुवियोगेन या स्वल्पा विकृतिर्भवेत् ।
चेतसो भावतत्त्वज्ञैः स शोक इति कीर्तितः[1] ॥ १४

यथा चण्डकौशिके हरिश्चन्द्रस्य[2] ।

किं शोचामि मदेकबान्धवतया सम्प्रत्यनाथाः प्रजाः
किं बन्धूनतिवत्सलानशरणान् किं मौलिभृत्यानहम् ।
किं दासीं द्विजसद्मनि प्रियतमां हा वत्स किं त्वां शिशुं
किं चण्डालभुजिष्यतामुपगतः पापान्निजं[3] जीवितम् ॥ १५

अथ क्रोधस्य लक्षणमाह ।

अवज्ञादिकृता चित्ते विकृतिर्या भवेत्खलु ।
स्वल्पा स च भवेत्क्रोधो भावविद्भिरुदाहृतः ॥ १६

यथा चण्डकौशिके दक्षिणाधनमलभमानस्य क्रुद्धस्य विश्वामित्रस्य वचनम् ।

प्रणाशाद्विद्यानां करतलगतानामुपचितो
निरुद्धो दुर्बुद्धेर्विनयमसृणैस्तस्य वचनैः[4] ।
शिखी वेगादन्तर्ज्वलितघनशुष्केन्धनगतो[5]
हविर्धारासिक्तं[6] विपिनमिव मन्युर्दहति माम् ॥ १७

अथ उत्साहस्य लक्षणमाह ।

शौर्यत्यागकृपावेशाच्चित्ते[7] या विकृतिर्भवेत् ।
स्वल्पा सूरिभिराख्याता उत्साह इति नामतः[8] ॥ १८

यथा कविकंकणस्य ।

आकर्ण्य संगर[9]महार्णवचेष्टितानि
गोष्ठीरसाहृतजनस्य[10] मनोविकारः ।
अङ्गे करोति पुलकं नयने विकाशं
कान्तिं च कामपि मुखे स्फुरणं च बाह्वोः ॥ १९

---

१ P संज्ञितः. २ P हरिश्चन्द्रः. ३ P प्राप्तो निजं. ४ P चरणैः. ५ B °घनपुष्पेन्धन°. ६ P बहिर्धारा°. ७ P °त्यागकृतावेशा°. ८ P मानतः. ९ P संगम°. १० B °रसाहृ-वरतस्य.

अथ भयस्य लक्षणमाह ।

अपराधादिना या च चित्ते स्वल्पापि जायते ।
विकृतिर्भावतत्त्वज्ञैर्भयं तत्कथितं[1] खलु ॥ २०

यथा किरातार्जुनीये[2] ।

प्रविततशरजालच्छन्नविश्वान्तराले[3]
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ ।
कथमपि जयलक्ष्मीर्भीतभीता विहातुं
विषमनयनसेनापक्षपातं विषेहे ॥ २१

अथ जुगुप्साया लक्षणमाह ।

अहृद्यवस्तुश्रवणाद् दर्शनाद्वापि[4] जायते ।
या चित्ते[5] विकृतिः स्वल्पा जुगुप्सा सा निवेदिता ॥ २२

यथा ।

तेन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥ २३

अथ विस्मयस्य लक्षणमाह ।

चमत्कारि च यत्कर्म तस्य श्रवणदर्शनैः[6] ।
चित्ते या विकृतिः स्वल्पा स विस्मय उदाहृतः ॥ २४

यथा माघे आकाशादवतरन्तं नारदं प्रति ।

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥ २५

ननु स्वल्पा विकृतिर्भाव इत्युक्तम्[7] । रत्यादिषु सा विकृतिः स्वल्पा दृश्यते । क्रोधादिषु च महती दृश्यते[8] । तत्कथं क्रोधादीनां भावत्वं इति वाच्यम्[9] ।

रौद्रादिरसापेक्षया क्रोधादीनां विकृतिः स्वल्पैव[10] ॥

इति श्रीमन्महाराजाधिराजश्रीहम्मीरराजात्मजश्रीमदल्लराजविरचितायां रसरत्नप्रदीपिकायां स्थायिभावलक्षणं नाम द्वितीयः परिच्छेदः ॥ २ ॥

---

१ B तद्विप्रकीर्तितं. २ After this P adds युद्धे. ३ P अविरतशर°. ४ P दर्शनादपि. ५ B T चेतसो ( for या चित्ते ). ६ B T स्मरणदर्शनैः. ७ T इत्युक्ता. ८ P T om from क्रोधादिषु up to दृश्यते. ९ B नैवम्. T मैवम्. १० B T क्रोधादिषु विकृतिरल्पैवास्ति.

अथ विभावानां लक्षणमाह ।

भावयन्ति विशेषेण ये रसान् वै मनोहरान् ।
ते विभावास्तु कथ्यन्ते नाट्यशास्त्रविशारदैः ॥ १

विशेषेण भावयन्ति उत्पादयन्ति ये रसान् ते विभावाः कथ्यन्ते ॥

अथ शृङ्गाररसस्य विभावानाह । आलंबनविभाव उद्दीपनविभावश्चेति[1] । तत्र आलंबनविभावः कामिनी । उद्दीपनविभावाः चन्द्रचन्दनादयः । एभ्यो यथा रसानामुत्पत्तिः तद्रसप्रस्तावे उदाहरिष्यते ॥ तथाह भरतः ।

ऋतुमाल्यालंकारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति[2] ॥ २

अथ हास्यरसस्य विभावानाह । विकृतवेषावलोकनं व्यङ्गदर्शनं विकृतालापश्रवणं असत्प्रलापकुहकाभिनयादयः विभावा भवन्ति[3] । एतेभ्यो हास्यरस उत्पद्यते ॥ तथाह भरतः ।

विपरीतालंकारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हास्यः ॥ ३

अथ करुणरसस्य विभावानाह । इष्टजननाशः शापः क्लेशः बन्धनं व्यसनं इत्यादयो विभावा भवन्ति । एतेभ्यो करुणरसो जायते ॥ तथाह भरतः ।

इष्टवधदर्शनाद्वा[4] विप्रियवचनस्य संश्रयाद्वापि[5] ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥ ४

अथ रौद्ररसस्य विभावानाह । अपघातः निर्भर्त्सनं वाक्पारुष्यं वैरिदर्शनं वैरिवर्णनं[6] संग्रामकर्म इत्यादयो विभावा भवन्ति । एतेभ्यो रौद्ररसो जायते ॥ तथाह भरतः ।

युद्धप्रहारपातनविकृतच्छेदनविदारणैश्चैव[7] ।
संग्रामसंभ्रमाद्यैरेभिः संजायते रौद्रः ॥ ५

अथ वीररसस्य विभावानाह । असंमोहः अध्यवसायः विनयः बलं पराक्रमः शक्तिः प्रतापः प्रभावः इत्यादयो विभावा भवन्ति । एतेभ्यो वीररसो जायते ॥ तथाह भरतः ।

---

१ P om आलंबनविभाव उद्दीपनविभावश्चेति. २ After this P adds एवं आलम्बनमुद्दीपनतया (°म्बनोद्दीप° ?) द्विविधो विभावो भवति. ३ P om विभावा भवन्ति. ४ P B इष्टजनस्य विनाशात्. ५ B शापात्क्लेशाच्च बन्धनव्यसनात्. T °वचनसंश्रवाद्वापि. ६ B T om वैरिवर्णनं. ७ P आयुधखड्गाभिघाताद् वैकृतिभेदेन विदारणाच्चैव । संग्रामसंभावनाद्यैः······ B आयुधखड्गाभिभवाद्वैकृतभेदेन विदारणैश्चैव । संग्रामसंभावार्थैः······ T आयुधखड्गाभिपातनवैकृतभेदनविदारणैश्चैव । संग्रामसंभावार्थैः······

उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात् ।
विविधादर्थविशेषाद्वीररसो नाम संभवति ॥ ६

अथ भयानकरसस्य विभावानाह । विकृतरवश्रवणं विकृतसत्त्वदर्शनं शून्यागारारण्यश्मशानदर्शनं स्वजनबन्धनश्रवणदर्शनं[1] इत्यादयो विभावा भवन्ति । एतेभ्यो भयानकरस उत्पद्यते[2] ॥ तथाह भरतः ।

विकृतरवसत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात्कृतकश्च[3] भयानको ज्ञेयः ॥ ७

अथ बीभत्सरसस्य विभावानाह । अहृद्यवस्त्ववलोकनं अहृद्यवस्तुश्रवणं इत्यादयो विभावा भवन्ति । एतेभ्यो बीभत्सरस उत्पद्यते[4] ॥ तथाह भरतः ।

अनभिमतदर्शनेन च गन्धरसस्पर्शदोषैश्च ।
उद्वेजनैश्च बहुभिः बीभत्सरसः समुद्भवति[5] ॥ ८

अथ अद्भुतरसस्य विभावानाह । दिव्यवस्तुदर्शनं वाञ्छितार्थलाभः अत्युत्कृष्टवस्त्ववलोकनं माया इन्द्रजालं इत्यादयो विभावा भवन्ति । एतेभ्योऽद्भुतरसो जायते[6] ॥ तथाह भरतः ।

यत्त्वतिशयार्थयुक्तं वाक्यं शिल्पं च कर्म रूपं च ।
एभिस्त्वर्थविशेषैः रसोऽद्भुतो नाम विज्ञेयः ॥ ९

अथैतेषां रसानां अनुभावानां लक्षणमाह ।

क्रियन्ते यै रसाः सम्यग् लोकानुभवगोचराः ।
तेऽनुभावास्तु कथ्यन्ते नाट्यशास्त्रविशारदैः ॥ १०

अनुभावयन्ति अनुभवगोचरतां नयन्ति रसान् इति अनुभावाः ॥

अथ शृंगाररसस्य अनुभावानाह । कटाक्षसंवलनं ललितमधुरांगरागः[7] मधुरभाषणं प्राशस्त्यं औज्ज्वल्यम् इत्यादयो अनुभावा भवन्ति । एतैः शृंगाररसोऽनुभूयते ॥ तथाह भरतः ।

नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
मधुरैश्चांगविकारैस्तस्याभिनयः प्रयोक्तव्यः ॥ ११

अथ हास्यरसस्य अनुभावानाह । ओष्ठविवरणं वदननासाकपोलस्पन्दनं[9] दृष्टिव्याकोशाकुंचनं स्वेदः आस्यरागः पार्श्वग्रहणं इत्यादयोऽनुभावा भवन्ति[10] । एतैर्हास्यरसोऽनुभूयते ॥ तथाह भरतः ।

---

१ B स्वजनवधश्रवण° २ B T एभ्यो भयानकस्य रसस्य प्रादुर्भावः स्यात्. ३ B T भयानको नाम संभवति. ४ B T एभ्यो बीभत्सरसस्य प्रादुर्भावः स्यात्. ५ B T बीभत्सरसो नाम संभवति. ६ B T एभ्योऽद्भुतरसस्य प्रादुर्भावो भवति. ७ P °मधुरांगहारः. ८ B T °श्चांगविहारैः. ९ P दशननासा°. १० B T स्युः.

विकृताकारैर्वाक्यैरङ्गविकारैश्च विकृतवेषैश्च ।
हास्यं जनयेद्यस्मात्तस्माज्ज्ञेयो रसो हास्यः ॥ १२

अथ करुणरसस्य अनुभावानाह । अश्रुपातः परिदेवनं मुखशोषः वैवर्ण्यं प्रलापः शून्यता निश्वासः स्मृतिलोपादयः अनुभावा भवन्ति । एतैः करुणरसोऽनुभूयते ॥ तथाह भरतः ।

श्वसनविरुदितैर्मोहागमैश्च परिदेवितैर्विलपितैश्च[1] ।
अभिनेयः करुणरसो[2] देहायासाभिघातैश्च[3] ॥ १३

अथ रौद्ररसस्य अनुभावानाह । ताडनं पीडनं[4] छेदः[5] प्रहारः शस्त्रसंपातः रक्तनयनता भ्रुकुटीदंतोष्ठपीडनं गंडस्फुरणं हस्ताग्रनिष्पेषणं इत्यादयोऽनुभावा भवन्ति । एतै रौद्रो रसोऽनुभूयते ॥ तथाह भरतः ।

नानाप्रहरणसंकुलशिरसः कम्पैः कराग्रनिष्पेषैः ।
एभिस्त्वर्थविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ १४

अथ वीररसस्य अनुभावानाह । स्थैर्यं धैर्यं शौर्यं त्यागः इत्यादयोऽनुभावा भवन्ति । एतैर्वीररसोऽनुभूयते ॥ तथाह भरतः ।

स्थितिधैर्यशौर्यवीर्यैरुत्साहपराक्रमप्रभावैश्च ।
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः[6] ॥ १५

अथ भयानकरसस्य अनुभावानाह । कंपितकं करचरणनयनचलन पुलका मुखवैवर्ण्यं स्वरभेदः इत्यादयोऽनुभावा भवन्ति । एतैर्भयानकरसोऽनुभूयते ॥ तथाह भरतः ।

करचरणनेत्रमस्तकसर्वाङ्गेषु प्रकम्पनैश्चैव ।
शुष्कौष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः ॥ १६

अथ बीभत्सरसस्य अनुभावानाह । सर्वाङ्गोपसंहारः[7] मुखनयनविकूणनं[8] निष्ठीवनं उद्वेगः इत्यादयोऽनुभावा भवन्ति । एतैर्बीभत्सरसोऽनुभूयते ॥ तथाह भरतः ।

मुखनेत्रविकूणनलोचननासामुखाच्छादनेनैव ।
अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः ॥ १७

अथ अद्भुतरसस्य अनुभावानाह । नयनविस्तारः अनिमेषप्रेक्षणं रोमाञ्चः अश्रु स्वेदः साधुवचनं इत्यादयोऽनुभावा भवन्ति । एतैरद्भुतरसोऽनुभूयते ॥ तथाह भरतः ।

---

१ B निःश्वसितेन च रुदितैर्महाप्रलापपरिदेवनैश्चैव. T श्वसनरुदितैर्महाप्रलापः (?) परि°. P om विलपितै°. २ P करुणाख्यो. ३ P B T देहाघाताभिघातैश्च. ४ P पाटनं. ५ After this B T add भेदः. ६ P वीररसस्याभिनयः. ७ P सर्वाङ्गसंहारः. ८ P मख-विकूणनं. T मुखनयनविधननं. ९ B आनननेत्रविकूणन°.

वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥ १८

॥ इत्यनुभावलक्षणम् ॥

अथ सात्त्विकानाह ।

स्तंभः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ १९
स्तंभो गतिनिरोधः स्यात् स्वेदः स्विन्नांगता मतः ।
रोमाञ्चो रोमहर्षः स्यात्स्वरभेदस्तु संज्ञितः ॥ २०
गद्गदत्वं वेपथुश्च कंपनं तु विवर्णता ।
मुखशोभान्यथा[1]भावस्त्वश्रु नेत्राम्बुशब्दितम् ॥
सर्वथा नष्टचेष्टत्वं प्रलयः कथितो बुधैः ॥ २१

यद्यपि एते यथासंभवं सर्वेषु रसेषु व्यभिचरन्ति तथापि व्यभिचारित्वमनादृत्य सत्त्वमात्रसंभवा भवन्ति[2] इति सात्त्विका इति भिन्नतया गणिताः । तच्च सत्त्वं परगतदुःखादिभावनायां अत्यन्तानुकूलान्तःकरणत्वं[3] मनःप्रभावः । तेन सत्त्वेन वृत्ताः सात्त्विकाः ॥

अधुना दिग्मात्रमुदाहियते । यथा[4] ।

आयातासि विमुञ्च[5] वेपथुभरं दृष्टासि किं केनचित्
नीलं चोलममुं[6] विमुञ्च[7] हरतु स्वेदं निशीथानिलः ।
इत्युक्ते भयसन्नकण्ठमसकृद्यामीति तल्पं गता
जल्पन्ती परिरभ्यते सुकृतिना स्वैरं नवस्वैरिणी ॥ २२

अथ वा ।

दृष्टव्या दयितेति लोचनयुगं बाष्पांबुभिः प्लावितं
गन्तव्यं सहसा तदन्तिकमिति स्तम्भेन रुद्धा गतिः ।
प्राप्तव्यः परिरम्भसंभ्रम इति प्रौढप्रकम्पौ भुजौ
विघ्नैरन्तरितानि हन्त जगति श्रेयांसि सर्वाण्यपि ॥ २

स्मरबाणलांगलाग्रैः कृष्टे भूयः कलेवरे क्षेत्रे ।
रोमाञ्चसस्यवृन्दे बीजं तन्व्याः समाश्लेषः ॥ २४

कयाचित्कामिन्या कोऽपि कामी वञ्जुलतरुमध्ये[8] संगमार्थमाहूतस्तत्र तामदृष्ट्वा तस्या अभिज्ञानार्थं मञ्जरीमादाय[9] तद्गृहमार्गेण गतवान् ।

---

१ T has ग्रंथपात from मुखशोभान्यथाभा……up to उदाहरणे यथा. २ After this B reads इति सात्त्विकतया गणिताः. ३ After this B ins नाम. ४ B om यथा. ५ B आयाता सखि मुञ्च. ६ P चैलममुं. ७ B च मुञ्च. ८ B अशोकतरुसमूहमध्ये. ९ B om मञ्जरीमादाय.

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरं ।
पश्यन्त्या भवति मुहुर्मलिना नितरां मुखच्छाया ॥ २५

द्रष्टुं न क्षमते न च प्रियतमं वक्तुं न तावद्गिरः[1]
श्रोतुं नैव विवर्तितुं प्रियतमा मुग्धा तदा केवलम् ।
संमूढेन्द्रियवर्गवृत्तिविधुरा क्रीडागृहे सुन्दरी
भित्तौ निर्मितपुत्रिकेव मदनव्यासक्तचित्ता स्थिता ॥ २६

एवमन्येऽपि सात्त्विका भावाः स्वयमूहनीयाः ॥

इति श्रीमन्महाराजाधिराजश्रीहम्मीरराजात्मजश्रीमदल्लराजविरचितायां रसरत्नप्रदीपिकायां विभावानुभावसात्त्विकलक्षणं नाम तृतीयः परिच्छेदः ॥ ३ ॥

---

अथ व्यभिचारिणां लक्षणमाह ।

रसे चैव[2] तथा भावे स्वेच्छया नियमं विना ।
चरन्तः कथिताः पूर्वैर्भावास्तु[3] व्यभिचारिणः ॥ १

अथ तेषां नामानि ।

निर्वेदग्लानिशंकाख्यास्तथासूयामदश्रमाः ।
आलस्यं च तथा दैन्यं[4] चिन्ता मोहः स्मृतिर्धृतिः ॥ २
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ ३
सुप्तं[5] विबोधो[6]ऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ।
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ॥ ४

एतेषां क्रमेण लक्षणान्याह ।

तत्त्वज्ञानापदीर्षादे[7]र्निर्वेदः स्वावमाननम्[8] ।

तत्र तत्त्वज्ञानजन्यनिर्वेदो यथा ।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सुप्रीणिताः[9] प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ५

तत्रापज्जनितो[10] यथा ।

राज्ञो विपद्बन्धुवियोगदुःखं देशच्युतिर्दुर्गममार्गसेवा ।
आस्वाद्यतेऽस्याः खलु निष्फलायाः फलं ममैतच्चिरजीवितायाः ॥ ६

---

१ P न वा तद्गिरः. २ P रसेष्वेव. ३ B सर्वे भावास्तु. ४ P चैव दैन्यं च. ५ P सुप्तिः. ६ B प्रबोधो°. ७ P °ज्ञानापदीर्ष्याभिः. ८ B स्वापमानिता. ९ B संप्रीणिताः. १० P विपज्जनितो.

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ ७

अथ ग्लानेर्लक्षणमाह।

रत्याद्यायासतृट्क्षुद्भिर्ग्लानिर्निष्प्राणता मता।[1]

यथा।

लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा
रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः।
तिमिरमिव दधानाः स्रंसिनः केशपाशा-
नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ ८

अथ शंकालक्षणमाह।

अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात्।

परक्रौर्याद्यथा।

दूराद्दवीयान्धरणीधराभं यस्ताटकेयं तृणवज्जघान।
हंता सुबाहोरपि ताटकारिः स राजपुत्रो हृदि बाधते माम् ॥ ९

स्वदुर्नयाद्यथा। रत्नावल्यां सागरिकां प्रति राजा चिन्तयति[2]।

ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वाऽऽलापं कलयति कथामात्मविषयाम्।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥ १०

असूयालक्षणमाह।

परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा।

तत्र गर्वजा[3] यथा। रावणस्य दूतो वदति।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥ ११

दौर्जन्यजा यथा।

यदि परगुणा न क्षम्यन्ते यतस्व तदर्जने
न हि परयशो निन्दाव्याजैरलं परिमार्जितुम्।

---

१ B °यासखंक्षुद्भिः. २ P राजर्षिः ज्ञापयति. ३ B गर्वाद्.

विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो
दिनकरकरान्पाणिच्छत्रैर्नुदन् श्रममेष्यसि ॥ १२

मन्युजा यथा ।

अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां
किं लब्धं शठ दुर्नयेन नयता सौभाग्यमेतां दशाम् ।
पश्यैतद्दयितारतिव्यतिकरोन्मृष्टांगरागारुणं
वक्षस्ते मलतैलपंकशबलैर्वेणीपदैरङ्कितम् ॥ १३

अथ मदस्य लक्षणमाह ।

हर्षोत्कर्षान्मदः पानात्स्खलदंगवचोगतिः ।

यथा ।

हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥ १४

अथ श्रमस्य लक्षणमाह ।

श्रमः खेदोऽध्वगत्यादिर्जनितः श्लथदेहवान्[१] ।

यथा ।

अलसललितमुग्धान्यध्वसंपातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यंगकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ १५

अथालसस्य लक्षणमाह ।

आलस्यं नाम गर्भाद्यैर्जैह्यं स्तंभासनादिमत्[३] ।

यथा ।

चलति कथंचित्पृष्टा यच्छति वचनं कथंचिदालीनां ।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥ १६

अथ दैन्यस्य लक्षणमाह ।

दौर्गत्यादेरनौजस्यं दैन्यं काष्र्ण्यामृजादिमत् ।

यथा ।

वृद्धोऽन्धः पतिरेष मंचकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी पुत्रस्य वार्तापि नो ।
यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां सुतवधूं श्वश्रूश्चिरं रोदिति ॥ १७

अथ चिन्तायाः लक्षणमाह ।

ध्यानं चिन्तेहितानाप्तेः शून्यताश्वासतापकृत् ।

---

१ B °ध्वगेयादि°. २ P क्षामदेह°. ३ B जृंभासना°.

पक्ष्माग्रग्रथिताश्रुबिन्दुनिकरैर्मुक्ताफलस्पर्धिभिः
कुर्वन्त्या हरहासहारिहृदये हारावलीभूषणम् ।
बाले बालमृणालनालवलयालंकारकान्ते करे
विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते ॥ १८

अथ मोहस्य लक्षणमाह ।

मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।

तत्र भयाद्यथा ।

प्रातर्धाटीभयात्काचित्परित्यक्तांबराव्रजत् ।[1]
उत्थाय शयनाद्वेगात्करा[2]श्लिष्टकुचद्वया ॥ १९

दुःखाद्यथा ।

तीव्राभिषंगप्रभवेन वृत्तिं मोहेन संस्तंभयतेन्द्रियाण
अज्ञानभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥

आवेगाद्यथा ।

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमादो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारः कोऽप्यंतर्जडयति च तापं च कुरुते ॥ २१

यथा वा[3] ।

धन्यासि या कथयसि प्रियसंगमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते च करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥ २२

अनुचिन्तनाद्यथा ।

स्थाणुमालिङ्गति स्वप्ने पतिबुद्ध्या नितंबिनी ।
पश्यन्ती तन्मयं सर्वमनुध्यानपरायणा ॥ २३

अथ स्मृतेर्लक्षणमाह ।

सदृशज्ञानचिन्ताद्यैः संस्कारात्स्मृतिरत्र च ।

तत्र सदृशज्ञानाद्यथा ।

मैनाकः किमयं रुणद्धि गगने[4] मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति[5] मां रावणं
आ ज्ञातं स जटायुरेव जरसा क्लिष्टो वधं वाञ्छति ॥ २४

संस्काराद्यथा ।

---

१ P प्रातर्द्धाटा°. २ B शयनात्काचित्क°. ३ P अथापि च. ४ B गमने. ५ B प्रस्वेलि.

स्मर्यते स हि वामोरु यश्च्युतो हृदयाद्बहिः ।
मच्चित्तभित्तौ सततं[1] शालभंजीव राजसे[2] ॥ २५

चिन्ताया यथा ।

निरानन्दः कौन्दे मधुनि विधुरो बालबकुले
रसाले सालम्बो लवमपि लवंगे न रमते[3] ।
प्रियंगौ नासंगं रचयति न चूतेऽपि रमते
स्मरन्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ २६

अथ धृतेर्लक्षणमाह ।

संतोषो ज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृत् ।

ज्ञानाद्यथा ।

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सममपि परितोषे निर्विशेषो विशेषः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ २७

शक्तितो यथा । रत्नावल्यां राजा ।

राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रज
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥ :

अथ व्रीडाया लक्षणमाह ।

दुराचारादिभिर्व्रीडा धार्ष्ट्याभावः समीरितः ।

यथा ।

तीक्ष्णाक्षिप्तशराग्रभिन्नहृदयस्यासृग्भरं मुञ्चतो
निन्दाकर्कशवर्णमुच्चकरणं श्रुत्वा वचो वालिनः ।
व्रीडानम्रशिरोधरः श्लथभुजो व्यासक्तचापांचलः
सद्यः संकुचिताननोऽवतु सदा रामाभिधः श्रीपतिः ॥ २९

आदिशब्दात्सुरतेरपि ।

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि च भृशम्[4] ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिभोगे[5] नववधूः ॥ ३०

अथ चपलताया लक्षणमाह ।

रागमात्सर्यविद्वेषैश्चापलं त्वनवस्थितिः ।

---

१ P भवती. २ P राजते. ३ P B कुरुते. ४ B गात्राणि विधृता (निभृतं ?).
५ B प्रथमपरिहासे.

तत्र रागाद्यथा ।

अन्यासु तावदतिमर्दसहासु भृंग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥ ३१

मात्सर्याद्यथा ।

विनिकषणरणत्कठोरदंष्ट्राक्रकचविशङ्कटकन्दरोदराणि ।
अहमहमिकया पतन्तु कोपात्सममधुनैव किमत्र मन्मुखानि ॥ ३२

द्वेषाद्यथा । मालतीमाधवे माधवेन[1] हते अघोरघंटे कपालकुंडला वदति ।

शान्तिः कुतस्तस्य भुजंगशत्रोर्यस्मिन्ननुक्तानुशया भुजंगी ।
जागर्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरु[2]र्भुजङ्गी ॥ ३३

अथ हर्षस्य लक्षणमाह ।

प्राशस्त्यमुत्सवादिभ्यो हर्षोऽश्रुस्वेदगद्गदैः ।

प्रियागमन[3]पुत्रजननोत्सवादिविभावैश्चेतःप्रसादो हर्षः । तत्र च अश्रुस्वेद-
गद्गदादयोऽनुभावाः । यथा ।

आयाते दयिते मरुस्थलभुवा[4]मुत्प्रेक्ष्य दुर्लङ्घ्यतां
गेहिन्या परितोषबाष्पकलिलामासज्य[5] दृष्टिं मुखे ।
दत्त्वा पीलुशमीकरीरकवलान्स्वेनाञ्चलेनादरा-
दुन्मृष्टं[6] करभस्य केसरसटाभाराग्रलग्नं रजः ॥ ३४

अथावेगस्य लक्षणमाह

आवेगः संभ्रमः प्रोक्तो विद्रवादिसमुद्भवः ।

यथा ।

आगच्छागच्छ सज्जं[7] कुरु वरतुरगं संनिधेहि द्रुतं मे
खङ्गः क्वासौ कृपाणीमुपनय धनुषा किं किमङ्गप्रविष्टम् ।
संरम्भोन्निद्रितानां क्षितिभृति गहनोऽन्योन्यमेवं प्रतीच्छन्
वादः[8] स्वप्नाभिदृष्टे[9] त्वयि चकितदृशां विद्विषामाविरासीत् ॥ ३५

अथ जडताया लक्षणमाह ।

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।

तत्रेष्टदर्शनाद्यथा ।

एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥ ३६

---

१ B om from माधवेन up to वदति. २ P °विषाङ्गारगुरु°. ३ B om from प्रियागमन° up to °योऽनुभावाः. ४ B पुरःस्थल°. ५ P B °बाष्पकलितामासाद्य. ६ P B °दरात्संमृष्टं. ७ P B शस्त्रं. ८ P B नादः (?). ९ P B सुप्ताभिदृष्टे.

अनिष्टदर्शनाद्यथा । मालतीमाधवे कपालकुंडलया हृतायां मालत्यां मकरन्दः ।

न यत्र प्रत्याशामनुवसति[1] नो वा रहयति
प्रतिश्रुत्तं चेतः प्रविशति च मोहान्धतमसम् ।
अकिंचित्कुर्वाणाः पशव इव तस्यां वयमहो
विधातुर्व्यापाराद्विपदि परिवर्तामह इमे ॥ ३७

अथ गर्वस्य लक्षणमाह ।

गर्वोऽभिजनलावण्यबलैश्वर्यादिभिर्मदः[2] ।

तत्र कुलाद्यथा ।

गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी
भूरिश्रेष्ठिकनाम धाम परमं[3] तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महाकुला न विदिताः कस्यात्र तेषामपि
प्रज्ञाशीलविवेकधैर्यविनयाचारैरहं चोत्तमः ॥ ३८

लावण्याद्यथा ।

लावण्यनिर्जितसमस्तवधूसमूह-
गर्वावधीरितजगत्त्रयरूपसृष्टिः ।
सख्यः किल प्रणयलोलकटाक्षजालै-
श्चेतोभुवः प्रचुरराज्य[4]मुरीकरोमि ॥ ३९

बलाद्यथा[5] । उदारराघवे[6] सीता दीयतामिति मंदोदरीवचनमनुमोदमानं सारणं मंत्रिणं[7] प्रति रावणः ।

सारण सारण त्वयाप्यहं विस्मृतः ।

विलोलचरणस्खलन्मुखरशृंखलानूपुराः[8]
कराहतपयोधरोच्छलदसृग्वमत्कुंकुमाः ।
हठग्रहविलंबिताकुलकुचांतलीलांशुकाः[9]
कृताभिनवमंडना[10] न विधृताः[11] सुराणां स्त्रियः ॥ ४०

ऐश्वर्याद्यथा ।

मेरौ सन्ति कियन्ति हेमशकलान्युच्चैः पयोधौ पुन-
र्माणिक्यानि च मौक्तिकानि विपुलाकाराणि रम्याणि च ।
यक्षाणामधिपस्य वेश्मनि सखे द्रव्यं कियद्वर्तते
सर्वं तुच्छतरं भवत्यनुदिनं मन्मंदिरं पश्यतः ॥ ४१

---

१ B °मनुपतति. २ P B °भिर्मतः. ३ B नगरं. ४ P प्रकटराज्य°. ५ P om बलाद्यथा. ६ P reads लावण्याद्यथा उदारराघवे; P ins the stanza लावण्यनिर्जित° etc after the stanza विलोलचरण° etc. ७ B om मन्त्रिणं. ८ B °चरणोल्लसन्मुखर° ९ P °नीलांशुकाः. १० B धृताभिनव°. ११ P नवधृताः (?).

अथ विषादस्य लक्षणमाह ।

प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥ ४२[1]

यथा ।

न भिक्षा दुर्भिक्षे पतति दुरवस्थाः कथमृणं
लभन्ते कर्माणि द्विजपरिवृढान्कारयति[2] कः ।
अदत्त्वापि ग्रासं दिनपतिरसावस्तमयते
क्व यामः किं कुर्मो गृहिणि गहनो[3] जीवनविधिः ॥ ४३

अथौत्सुक्यस्य लक्षणमाह ।

औत्सुक्यं वांछितार्थस्य लाभे कालासहिष्णुता ।

यथा रत्नावल्यां सागरिकासमागमोत्सुको[4] राजा ।

तीव्रः स्मरसंतापो न तथादौ बाधते यथा प्राप्ते[5] ।
तपति प्रावृषि सुतरामभ्यर्णजलागमो दिवसः ॥ ४४

अथ निद्राया लक्षणमाह ।

मनःसंमीलनं निद्रा चिन्तालस्यश्रमादिभिः[6] ।

यथा ।

निद्रानिमीलितदृशो मदमन्थराणि
नाप्यर्थवन्ति[7] न च यानि निरर्थकानि ।
अद्यापि मे मृगदृशो मधुराणि तस्याः[8]
तान्यक्षराणि[9] हृदये किमपि ध्वनन्ति ॥ ४५

अथापस्मारलक्षणमाह ।

आवेशो ग्रहदोषाद्यैरपस्मारो यथाविधि ।

यथा ।

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरंगं ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशंके ॥ ४६

अथ सुप्तस्य लक्षणमाह ।

सुप्तं निद्रोद्भवं तच्च[10] श्वासोच्छ्वासक्रियापरम् ।

यथा ।

अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।
कथमपि परिवृत्ता निद्रयांधा किल स्त्री
मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ ४७

---

१ B om from प्रारब्ध° up to °षणादिकृत्. २ P °परिदृढान्का°. ३ B कविनो (?).
४ P °समागमे उत्सुकः. ५ B यथासन्नः. ६ P B °लस्यक्लमादिभिः. ७ P तात्पर्यवन्ति.
८ B मधुराक्षराणि. ९ B न्यस्ताक्षराणि. १० P तत्र.

अथ विबोधलक्षणमाह ।

विबोधः परिणामादेस्तत्र जृम्भाक्षिमर्दने[1] ।
स्वप्नान्ते[2]निद्राच्छेदाभ्यामाहारपरिणामतः ।
शब्दस्पर्शादिकैश्चान्यैः स्मृतेर्वा जाग्रति स्थितैः ॥ ४८

यथा ।

चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥ ४९

अथामर्षस्य लक्षणमाह ।

अधिक्षेपापमानादेर्[3]मर्षोऽभिनिविष्टता ।

अधिक्षेपाद्यथा[4] ।

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।
बलानां नाशेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजन्प्रियसखबलं वेत्सि समरे ॥ ५०

वेणीसंवरणनाटके[5] कर्णकलहावसरे दुर्योधनं प्रति अश्वत्थामा कथयति अयं पापेति[6] ।

अपमानाद्यथा ।

युष्मच्छासनलंघनांभसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममापि न गुरुर्नाहं विधेयस्तव ॥ ५१

अथावहित्थाया लक्षणमाह ।

लज्जाद्यैर्विक्रियागुप्ताववहित्थेत्यविक्रिया ।

यथा ।

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ५२

यथा वा रत्नावल्यां सागरिका सुसंगतां प्रियसखीं[7] दृष्ट्वालिखितराजरूपं चित्रफलकमाच्छाद्याकारसंवृतिं[8] कृतवती ॥

---

१ B तत्र जृम्भाङ्गमर्दनम्. २ B om from स्वप्नान्त° up to स्थितैः. ३ B °क्षेपावमाना°. ४ B om अधिक्षेपाद्. ५ B om from वेणीसंवरण° up to अपमानाद्यथा and reads only यथा वा. ६ After this P ins पद्येन (?). ७ P om प्रियसखीं. ८ P °राजरूपचित्रकमासाद्याका°.

दुष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।

यथा कृतधनुर्भङ्गं रामं परशुरामो वदति ।

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंश्यान् ।
पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥ ५३

विरुद्धवचनाद्यथा ।

एतैस्त्वं परुषाक्षरैश्च वचनैर्दौर्मुख्यमापादय-
न्नुद्वेगं जनयञ्जनस्य नितरां प्राप्तोऽसि मत्संनिधिम् ।
तीव्राघातचपेटदारितमुखं सम्यङ् महीमण्डले
मूर्च्छाविश्लथकायकांडविकलं त्वां पातयिष्याम्यहम् ॥ ५४

चौर्याद्यथा ।

अरे सीताचोर त्रिदशवनितानामपहृतेः
सगर्वं प्रागल्भ्यं[1] जहिहि खलु सौमित्रिपुरतः ।
यदेतैर्नर्दद्भिः[2] कवलितदिगन्तैर्मम शरै-
रिदानीं ज्ञातव्यं प्रचुरतरपापस्य[3] च फलम् ॥ ५५

अथ मतेर्लक्षणमाह ।

भ्रान्तिच्छेदोपदेशेन शास्त्रादेस्तत्त्वधीर्मतिः ।

यथा किरातार्जुनीये[4] ।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ ५६

अथ व्याधेर्लक्षणमाह ।

व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः ।

यथा ।

अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्ता गुरुभ्योऽर्पिता
दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः ।
अद्य श्वः परिनिर्वृतिं व्रजति सा श्वासैः[5] परं खिद्यते
विश्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥ ५७

यथा[6] वा ।

पाण्डुक्षामं वदनं[7] हृदयं सरसं तवालसं[8] च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ५८

---

१ P स्वगर्भ( र्वं )प्रागल्भ्यं. २ P °र्निर्यद्भिः. ३ P प्रचुरकृतपापस्य. ४ P om किरातार्जुनीये. ५ P सोच्छ्वासैः. ६ P अथ. ७ P om वदनं. ८ P तथालसं.

अथोन्मादस्य लक्षणमाह ।

अप्रेक्ष्यकारितोन्मादः[1] सन्निपातग्रहादिभिः ।

यथा विक्रमोर्वश्यां पुरूरवा मेघं विलोक्य सक्रोधम् ।

अरे रे रक्षस्तिष्ठ तिष्ठ । क मे प्रियतमामादाय गच्छसि । (पुनर्विचार्य आह[2])

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः[3]
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो[4] न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ ५९

अथ मरणं सुप्रसिद्धमिति लक्षणं नोच्यते उदाहरणमात्रम्[5] । यथा ।

पश्यन्तु भवन्तस्ताटकाम् ।

हृन्मर्मभेदिपतदुत्कटकंकपत्र-
संवेगतत्क्षणकृतस्फुटदंगभंगा ।
नासाकुटीरकुहरद्वयतुल्यनिर्य-
दुद्बुद्बुदध्वनदसृक्प्रसरा मृतैव ॥ ६०

एतत्तु शृङ्गारे न वक्तव्यम् । यत्र पुनर्जीवनसंभावना[6] तत्र शृंगारेऽपि वक्तव्यम्[7] । यथा कादंबर्यां पुण्डरीकस्य मरणम्[8] । यदि शृंगारेऽपि[9] वक्तव्यं तदा मरणव्यवसायमात्रमभिप्रायं वर्णयेत्[10] । यथा रत्नावल्यां सागरिकाया उद्बन्धनव्यवसाय[11] एव वर्णितः ॥

यथा[12] वा ।

संप्राप्तेऽवधिवासरे क्षणममुं त्वन्मार्गवातायनं[13]
वारंवारमुपेत्य निःक्रपतया निःश्वस्य किंचिच्चिरम् ।
संप्रत्येव निवेद्य केलिकुररीं[14] सास्रं सखीभ्यः शिशो-
र्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः ॥ ६१

अवधिदिवसान्ते समागतस्य[15] नायकस्य पुरतो नायिकासखीजनवचनमेतत्[16] ॥

अथ त्रासस्य लक्षणमाह ।

त्रासस्तु कथितश्चित्ते क्षोभो घोरस्वनादिभिः ।

---

१ B अप्रेक्षिकारि°. २ B om आह. ३ B दुष्ट°. ४ B च दुर्धारासारो. ५ B उदाहरणं. T उदाहरणे. ६ T °जीवनसंभावेन. ७ After this P adds यत्र जीवनमस्ति तन्मरणं शृंगारेऽपि वक्तव्यम्. ८ P पुण्डरीकमरणम्. ९ B T यदि वा शृंगारे. १० B वर्जनीयम् (?). T वर्णनीयम् (?). ११ P बुद्धं (?) निधनव्यवसायः १२ P अथ. १३ T तन्मार्ग°. १४ P °कुररीः. १५ B °दिवससमागतस्य. १६ B नायिकावचनं°. T नाथपुरतो नायिकासखीवचनं.

आकर्ण्य गर्जितं घोरं जलदानां समागमे[1] ।
बाला विधूतलज्जेव सत्रासं श्लिष्यति प्रियम्[2] ॥ ६२

अथ वितर्कस्य लक्षणमाह ।

तर्को विचारः संदेहाद्[3] भ्रूशिरश्चालनादिभिः ।

यथा ।

किं लोभेन विलंघितः स भरतस्तेनैतदेवं कृतं
सद्यः स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं[4] द्वितयमप्यार्योऽनुजोऽसौ गुरुः
माता तातकलत्रमित्यनुचितं शंके विधात्रा कृतम् ॥ ६३

अथैतेषां सात्त्विकानां च[5] व्यभिचारमाह ।

आलस्यौग्र्यजुगुप्साश्च वर्ज्याः संभोगनामनि[6] ।
शृंगारे विप्रलम्भे च निर्वेदो ग्लानिरेव च ॥ ६४
शंका श्रमस्तथौत्सुक्यं[7] निद्रा स्वप्नस्तथैव[8] च ।
सुप्तं[9] विबोधो व्याधिश्च उन्मादो मरणं तथा ॥ ६५
अपस्मारस्तथा[10] जाड्यमसूया व्यभिचारिणः ।
अवहित्थं[11] तथालस्यं निद्रा स्वप्नं प्रबोधनम् ॥ ६६
असूया च ततस्तंद्रा हास्ये स्युर्व्यभिचारिणः ।
औत्सुक्यं च तथा ग्लानिर्मोहनिर्वेददीनता[12] ।
जडता च विषादश्च श्रमस्[13]तस्माद्भयं परम् ॥ ६७
अपस्मारस्तथोन्मादो व्याध्यालस्ये स्मृतिस्तथा ।
वेपथुः स्तंभवैवर्ण्ये[14] स्वरभेदोऽश्रु तत्परम् ॥ ६८
करुणे[15] कथिताः सद्भिः रसे[16] तु व्यभिचारिणः ।
उत्साहः[17] स्मृतिरावेगः खेदामर्षौ च चापलम् ॥ ६९
उग्रत्वं वेपथुश्चैव रोमाञ्चः स्वरभिन्नता ।
रौद्रे रसे तु कथिता[18] विद्वद्भिर्व्यभिचारिणः ॥ ७०

---

१ P जलागमे. २ P धियाम् (?). ३ B संदेहो. ४ T चिन्तकं. ५ P om च. T reads सात्त्विके (for सात्त्विकानां). ६ P °भोगना. ७ B T श्रममथौत्सुक्यं. ८ B T स्वप्नमथैव. ९ P सुप्तिः. १० B अपस्मारमथो. ११ B T om from अवहित्थं up to हास्ये स्युर्व्यभिचारिणः. १२ P मोहो निर्वेददीनता (?). १३ P भ्रमः. T क्रमः. १४ P °वैवर्ण्यं. १५ B T करुणाः (?). १६ P एते. १७ T om from उत्साहः up to व्यभिचारिणः. १८ P गणिताः.

धृतमातश्च गवश्च आवगश्च स्मृतस्तथा ।
अमर्षौग्र्ये[1] च रोमाञ्चो[2] वीरे स्युः व्यभिचारिणः ॥ ७१
स्तंभः[3] स्वेदो गद्गदत्वं रोमांचो वेपथुस्तथा ।
स्वरभेदोऽथ वैवर्ण्यं शंका मोहस्तु दीनता ॥ ७२
आवेगश्चैव चापल्यं त्रासोऽपस्मार एव च ।
मरणं मूर्च्छनं[4] चैव भये स्युर्व्यभिचारिणः ॥ ७३
अपस्मारो मतिर्व्याधिर्मोहावेगौ विवर्णता ।
कथिता रसभावज्ञैः बीभत्से व्यभिचारिणः ॥ ७४
स्तंभः स्वेदो गद्गदत्वमश्रुरोमाञ्चविभ्रमाः[6] ।
आवेगो जडता प्रोक्तास्त्वद्भुते व्यभिचारिणः ॥ ७५
शेषास्त्वन्येऽपि सर्वेषु[7] चरन्ते[8] व्यभिचारिणः ।
ऊहनीयाः प्रयत्नेन नाट्यशास्त्रविशारदैः[9] ॥ ७६

त्रयस्त्रिंशद्[10] व्यभिचारिणश्चाष्टौ सात्त्विका इत्येकचत्वारिंशद्भावा[11] गणिताः । एषां च व्यभिचारिणामन्येषां[12] व्यभिचारो दृश्यते । तर्हि[13] ते तावत्कुतो निष्पन्नाः कानि नामानीत्याशंक्याह ।

स्थायिनौ च भयोत्साहौ व्यभिचारे प्रकीर्तितौ[14] ।
मोहान्मूर्च्छा तथालस्यात् तन्द्रा च कथिता स्फुटम् ॥ ७७
आवेगात्संभ्रमः प्रोक्तः सुप्तात्स्वप्नस्तथैव च ।
स्वरभेदाद्गद्गदत्वं ज्ञेयं नाट्यविचक्षणैः ॥ ७८

आलस्यतन्द्रयोर्लक्षणं पृथग्विविच्यते[15] । आलस्ये ज्ञानसंबंधोऽस्ति[16] । तन्द्रायामत्यल्पत्वेन[17] ज्ञानसंबन्धः । अत एव आलस्यभेदस्तन्द्रा । इष्टानिष्टदर्शनाद्[18] झटिति व्याकुलत्वं संभ्रमः । स च आवेगस्य भेदः । निद्रासुप्तयोर्मध्ये स्वप्नः । निद्राया अधिकः सुप्तादूनः । सुप्तस्य भेदः स्वप्नः । सात्त्विकानां मध्ये स्वरभेदः अस्ति । तत्र[19] स्वरस्य लोपः । स्वरभेदस्य भेदो गद्गदता । अस्यां[20] अव्यक्तवर्णत्वं भवति । इति व्यभिचारिणां व्यभिचारिणः ॥

इति श्रीमन्महाराजाधिराजश्रीहम्मीरराजात्मजश्रीमदल्लराजविरचितायां
रसरत्नप्रदीपिकायां व्यभिचारिणां चतुर्थः परिच्छेदः ॥ ४ ॥



१ B om from अमर्ष्यौ° up to व्यभिचारिणः. २ T read अमर्षौग्र्यं सरोनीचं (?). P अमर्षौग्र्यं सरोमाञ्चं. ३ B om from स्तंभः up to वेपथुस्तथा. ४ P मूर्च्छितं. ५ B मृति°. T महा° ६ B T °संभ्रमाः. ७ B T सर्वत्र. ८ P चरन्तो. ९ B °विचक्षणैः. १० P द्वात्रिंशद् (?). ११ B T p इत्येवं चत्वारिंशद्भावा. १२ P एषां व्यभिचारेप्य.···B T p °व्यभिचारिण्यन्येषां. १३ P om तर्हि. १४ B T p व्यभिचारि (?) च कीर्तितौ. १५ P पृथग्विरच्यते. १६ B T p ज्ञानप्रबोधोऽस्ति. १७ P निद्रायामल्पत्वेन. १८ B T °दर्शनत्वाद्. १९ P om from तत्र up to लोपः. २० B T p om from अस्यां up to व्यभिचारिणः.

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायीभावो रसः स्मृतः ॥ १

एतैर्मिलितैः स्थायीभावः स्वाद्यतां[१] चर्व्यमाणरूपतामानीयते[२] । कुत्रचिद्विभावानुभावाभ्यामेव । कुत्रचिद्विभावेन । कुत्रचिदनुभावेन वा[३] । कुत्रचिद्व्यभिचारिणा वा सात्त्विकेन वा । एवमेकेन द्वाभ्यां बहुभिर्वेत्यर्थः । अयमस्याभिप्रायः[४] । विभावादिभिर्मिलितैरेव रसः[५] समुत्पद्यते । परन्तु[६] यत्र येन रसः समुत्पद्यते तत्र तस्य मुख्यत्वम् । अन्ये गम्या भवन्ति ॥

ते कियन्त इत्यत आह ।

शृङ्गारहास्यकरुणरौद्रवीरभयानक-[७] ।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये[८] रसाः स्मृताः ॥ २

अथ रसानां क्रमेण लक्षणमाह[९] । तत्र रसप्रधानतया[१०] प्रथमं तावत्[११] शृंगाररसस्य लक्षणमाह ।

रम्यदेशकलाकालवेषभोगादिसेवनैः[१२] ।
प्रमोदात्मा रतिः[१३] सैव यूनोरन्योन्यरक्तयोः[१४] ।
प्रकृष्यमाणा[१५] शृङ्गारो रसो नाम हि जायते ॥ ३

अन्योन्यरक्तयोरिति[१६] । यत्र अन्योन्यं अनुरागः तत्रैव रसः । केवलं पुंसः केवलं वा स्त्रियः[१७] अनुरागे[१८] रसाभास एव । यूनोरिति[१९] नान्ययोः । एतेन मित्रभ्रातृबन्धुसुहृद्गुरुमुनिदेवतादिषु रतिरेव । अस्य[२०] शृङ्गाररसस्य[२१] द्वौ भेदौ भवतः[२२] । संभोगो[२३] विप्रलम्भश्च इति[२४] ।

तत्र संभोगस्य[२५] लक्षणमाह ।

अनुकूलौ निषेवेते[२६] यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि स संभोग इति स्मृतः ॥ ४

---

१ P आस्वाद्यतां. २ B °मानीयमानः. T p °मानीयतां. ३ P p om वा. ४ T अथ रसस्याभि° (?). ५ P om रसः. ६ P om from परन्तु up to मुख्यत्वम्; and reads तत्र रसमुख्यत्वम् (?). ७ All mss read °वीरभयानकाः (?). ८ P नाट्येष्वेते (for अष्टौ नाट्ये). ९ P प्रतिपाद्यते (for आह). १० P om रसप्रधानतया. ११ P om तावत्. १२ P रम्ये देशे कलाकालवेषभोगादिसंवनैः. १३ P प्रमोदात्मरतिः. B प्रमोदात्मा रसः (?). p T प्रसादात्मरतिः. १४ B T p °न्योन्यसक्तयोः. १५ P B T °माणः. p प्रत्यक्षमाणः (?). १६ B T p °सक्तयो°. १७ B T p स्त्रिया (?). १८ B T p अनुरागो. १९ P om from यूनोरिति up to रतिरेव. २० P अथ. २१ P शृंगारस्य. २२ B T p om भवतः. २३ B संयोगो. २४ B T p om इति. २५ B संयोगस्य. २६ B p निषेवेतां.

अस्यापि बहवो भेदा भवन्ति । अन्योन्यावलोकनम् । अन्योन्यसंभाषणम् । अन्योन्यस्पर्शनम् । अन्योन्योपालंभादिभिः[1] । तत्रापि विभावजोऽनुभावजो व्यभिचारिजः सात्त्विकजश्चेति[2] । तत्रापि नायकनायिकयोरु[3]त्तममध्यमाधम-भेदेन[4] । तत्रापि अवस्थाभेदेन । बाला[5] युवती प्रौढा वृद्धा । तत्रापि कामावस्था-भेदेन । तत्रापि अष्टनायिकाभेदेन । यथासंभवं बहवो भेदा भवन्ति । दिङ्-मात्रमुदाह्रियते ॥

तत्र स्थानविभावजो[6] यथा ।

यः कौमारहरः स एव हि वरः ता एव चैत्रक्षपाः
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ[7]
रेवारोधसि वेतसीतरुतले चेतः समुत्कंठते ॥ ५

तत्र[8] कालविभावजो यथा ।

त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ६

तत्र कलाविभावजो[9] यथा ।

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनि[10]र्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं[11] नुदति विषयाद्रागबन्धः स एव ॥ ७

मालविकाग्निमित्रनवनाटके[12] नर्तकीवर्णनमेतेन ॥

अनुभावजो यथा ।

चेलांचलं न्यस्य कुचांचले [13]मामालोकयन्ती नयनांचलेन ।
इतो गता वा क्व गता न जाने गेहं गता वा हृदयं गता वा ॥ ८

अथ वा इदं उदाहरणम्[14] ।

ईषद्वक्रितपक्ष्मपंक्तिभिरनाकूत[15]स्मितैर्वीक्षितैः
एतैरेव तवाद्य[16] सुन्दरि करक्रोडे जगद्वर्तते ।
अन्तःपांसुलहेमकेतकिद[17]लद्रोणीदुरापश्रियो
दोर्मूलस्य निवेदनादिह पुनः क्रूरे किमाकांक्षसि ॥ ९

---

१ P अन्योन्यं उपा°. २ P व्यभिचारी सात्त्विकश्च. ३ P B नायकयोरुत्तम°. ४ P °धमयोः प्रकृतिभेदेन. ५ P om from बाला up to वृद्धा. ६ P स्थानभावजो. ७ p °विधेराखारोधसि. ८ p om from तत्र up to वधूजनः. ९ Mss read कालविभावजो (for कला°). १० B T शान्तो योनि°. ११ B T भावान्. १२ B T p om from मालविका° up to °भेतेन. १३ P कुचांचलेन (?) T कुचस्थले मा°. १४ B T p read यथा वा. १५ P °रनाक्रुष्टस्मितै°. १६ P तथाद्य. १७ T p °केतक°.

व्यभिचारिभेदाद्यथा रत्नावल्याम् ।

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धु[2]वधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता[3] श्लिष्टा शिवायास्तु वः ॥ १

अन्योन्यावलोकनं यथा ।

स्मेरास्यां[4] स्फुरफुल्लगण्डफलकामौत्सुक्यमातन्वतीं[5]
नीलेन्दीवरदामदृष्टिसुभगां रम्ये वसन्तोत्सवे ।
स्विद्यत्पाणिसरोरुहां सपुलकस्तंभाभिभूतां[6] पुरो
दृष्ट्वा हन्त मनो मनोभवशतैराक्रान्तमासीन्मम ॥ १

अन्योन्याश्लेषो यथा[7] ।

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद मामिमामलमिति[9] क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता[10] नु किं[11] मनसि मे लीना विलीना नु किम् ॥ १२

तत्र सुरतान्तो[12] यथा ।

शान्ते मन्मथसंगरे रणभृतां सत्कारमातन्वती
वासोदाज्जघनस्य पीनकुचयोर्हारं श्रुतेर्मण्डनम् ।
बिम्बोष्ठस्य च वीटिकां सुनयना पाण्यो रणत्कंकणे[13]
पृष्ठालंबिनि केशपाश[14]निचये युक्तो हि बन्धक्रमः[15] ॥ १३

तत्र मानग्रहो यथा ।

इंदीवरेण नयनं मुखमंबुजेन
कुन्देन दन्तमधरं नवपल्लवेन ।
अङ्गानि चम्पकदलैश्च विधाय[16] वेधाः
कान्ते कथं रचितवानुपलेन चेतः ॥ १४

तत्र मानपरित्यागो[17] यथा ।

सुतनु जहिहि[18] मौनं[19] पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥ १५

---

१ P व्यभिचारिभेदो यथा. B व्यभिचारिजभेदाद्यथा. २ P यातैर्बन्धु°. ३ P सहिता (?) ४ P स्मेराभ्यां (?) ५ P °मालम्बतीं°. ६ P सपुलकां स्तंभा°. ७ B T p °श्लेषाद्यथा. ८ P °विलसच्छ्री°. ९ P T p मातिमामल°. १० B लिखिता ( for नु मृता ). ११ T p स्थिता ( for नु किं ). १२ T p सुखान्तो. १३ T रणत्कंकणं. १४ T °लंबितकेश°. १५ P बन्धः कृतः. १६ p प्रविधाय. B स विधाय. १७ B T p मानत्यागो. १८ P विजहि. १९ p T कोपं.

तत्रोपालम्भभाषणं यथा ।

पुरासीदस्माकं प्रथममविभक्ता[1] तनुरियं
ततोऽसि त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥ १६

तत्राधमस्त्रीकोपो यथा ।

सालक्तकेन नवपल्लवकोमलेन
पादेन नूपुरवता मदनालसेन ।
यस्ताड्यते दयितया प्रणयापराधे[2]
सोऽङ्गीकृतो भगवता मकरध्वजेन ॥ १७

तत्र बालाकोपो यथा ।

सा पत्युः[3] प्रथमापराधसमये[4] सख्योपदेशं विना
नो जानाति सविभ्रमांगवलनं वक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः[5] ॥ १८

तत्र प्रथमसमागमे बालाचित्तार्जनं[6] यथा कविकङ्कणस्य[7] ।

नायस्तासि महीभृता सुरतरोः काण्डेन नोत्पीडिता[8]
नैवोच्चैःश्रवसः खुरेण कलिता नो वा विषेणार्दिता[9] ।
पायाद्विश्वमिदं हरिः कुतुकिनीं लज्जावनम्राननां
लक्ष्मीमङ्कगतां विधाय मधुरं कर्णोपकण्ठे वदन् ॥ १९

तत्राभिनवाभिसारिका[10] यथा ।

विरचय कुचयोर्निचोलबन्धं वितर लघूनि कियंतिचित्पदानि ।
निजपतिपरिभोगपातकानां प्रशमनतीर्थमिदं पुरो निकुञ्जः[11] ॥ २०

तत्र कृष्णाभिसारिका यथा ।

मंदं निधेहि चरणौ परिधेहि वासो
नीलं[12] पिधेहि वलयावलिमंचलेन[13] ।
मा जल्प साहसिनि शारदचन्द्रकान्त-[14]
दन्तांशवस्तव तमांसि शमं नयन्ति[15] ॥ २१

..त्र शुक्लाभिसारिका यथा ।

सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्या गतोऽस्तमभूद्विधुः ।

---

१ P °मवभिन्ना. T p °मविभिन्ना. २ B T p प्रथमापराधे. ३ B सख्युः (?) ४ p प्रथमेऽपराध.° ५ p °ल्लालोत्कटै°. B लुलल्लोलोत्कटै°. T लुठल्लोलत्कटै°. ६ T °च्चित्ता-वर्जनं. ७ P om कविकंकणस्य. ८ P T नो पीडिता. ९ B विषाणा° (?) १० P B °त्राभिनवसारिका. ११ P निमज्ज. १२ P नीरं. १३ p °मंचकेन (?) P °मंचतेन (?) १४ P शाकर°. १५ P समापयन्ति.

प्रियतमभ्गान्मुक्तातंका[1] क्व नासि शुभप्रदः ॥ २२

तत्रोद्दामाभिसारिका[2] यथा ।

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती[3] कांची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे समाहितडिण्डिमा[4]
किमपरमतस्त्रासोत्कंपा[5] दिशः समुदीक्षसे

तत्र बालासुरतं यथा ।

अंसाकृष्टदुकूलया[6] सरभसं गूढौ भुजाभ्यां स्तना-
वाकृष्टे जघनांशुके कृतमधः संसक्तमूरुद्वयम्[7] ।
नाभीमूलनिबद्धचक्षुषि मयि व्रीडानतांग्या तया
दीपः फूत्कृतिवातवेपितशिखः कर्णोत्पलेनाहतः ॥ २

तत्र विपरीतसुरतं[8] यथा ।

चलत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमंदहासम्
पुण्यातिरेकात्पुरुषा लभन्ते पुंभावमंभोरुहलोचनानाम् ।

एवं[9] शृङ्गाररससंभोगभेदाः स्वयमूहनीयाः ॥

अथ विप्रलम्भस्य लक्षणमाह ।

भावो यदा रतिर्नाम[10] प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥ २६

अथ तस्य भेदानाह ।

अभिलाषादसंप्राप्तेर्विरहाद्गुरुवाक्यतः ।
देशांतरगतेश्चैव[11] तथेर्ष्याकरणादपि ।
शापादपि च विज्ञेयो विप्रलम्भस्तु पंचधा ॥ २७

अभिलाषादसंप्राप्तेर्यथा ।

किंचिद्वक्रितकंठकंदलदलत्पीनस्तनावर्जन-
व्यायामांचितकंचुकं[12] मृगदृशस्तस्यास्तदालोकितम्[13] ।
वाचस्ताश्च विदग्धमुग्धमधुराः स्फारीभवन्मन्मथा
हं हो मानस किं स्मरस्यभिमताः सिध्यन्ति पुण्यैः क्रियाः ॥ २८

---

१ P प्रियगृह.° २ B तत्र दिनाभि° (?) T तत्रोद्दम्माभि°. ३ P कलरव°. ४ T p वमाहित°. ५ P °किमपरमितस्त्रासोत्कंपं T °सोत्कंपं. ६ P अंगाकृष्ट°. ७ B संत्रासमूरु°. ८ B T °रीतरतं. ९ B T p om from एवं up to स्वयमूहनीयाः. १० P भावो रतिर्यदा नाम. T यदि (for यदा). ११ P देशांतरागते°. १२ P °यामांचिकुंचुकं. १३ T p °दालोकनम्.

यथा[१] वा ।

स्मरमयनदीपूरेणोढा मुहुर्गुरुसेतुभिः
यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखै-
र्नयननलिनीनालानीतं पिबंति रसं प्रियाः ॥ २९

विरहाद्यथा ।

अन्यत्र[२] व्रजतीति का खलु कथा नाप्यस्य[३] तादृक्सखा
यो मां नेच्छति नागतश्च ह ह हा[४] कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वांता निशांतांतरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ३०

यथा[५] वा सीतावियोगदुःखितस्य श्रीरामस्य वचनम्[६] ।

हारो नारोपितः कण्ठे मया विरहभीरुणा[७] ।
इदानीमंतरे जाताः सरित्सागरपर्वताः ॥ ३१

यथा[८] वा माल्यवंतपर्वते श्रीरामो जलदागमं[९] विलोक्य विरहाकुलो ब्रूते ।

स्निग्धश्यामलकांतिलिप्तवियतो वेल्लद्बलाका घना[१०]
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाकुलाः[११] ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वंसहो
वैदेही तु[१२] कथं भविष्यति ह हा हा देवि धीरा भव[१३] ॥ ३२

गुरुवाक्यतो देशान्तरगतेर्यथा[१४] ।

धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वाससमुदश्रुणा विरहिणीं बालां चिरं ध्यायता ।
अध्वन्येन विमुक्तकंठकरुणं रात्रौ[१५] तथा क्रन्दितं
ग्रामीणैः पुनरध्वगस्य[१६] वसतिर्ग्रामे निषिद्धा यथा ॥ ३३

यथा[१७] वा ।

वसंतप्रारंभे[१८] चिरविरहखिन्ना सहचरी
यदि प्राणान्मुंचेत्तदिह वधभागी[१९] भवति[२०] कः ।
वयो वा स्नेहो वा कुसुमविशिखो[२१] वेति विमृशन्
तुहीति प्रव्यक्तं[२२] पिकनिकरझंकारम[२३]शृणोत् ॥ ३४

---

१ P अथ. २ B P अन्यस्यां. T अन्यैः संसृज°. ३ P नाथस्य. ४ P सहसा. ५ P अथ. ६ P reads रामवियोगदुःखितायाः सीताया वचनम्. ७ B T विश्लेष.° ८ P अथ. ९ P °गमनं. १० B °लाको घनो. ११ P °मानन्दकोलाहलाः. १२ P वैदेहीति (?) १३ B हहा रामोऽस्मि सर्वसहः. T हहाहाहेति घोरं वचः. १४ B °तरगतो यथा. १५ T p °कंठमखिलां रात्रिं. १६ p व्रजने जनस्य. १७ P अथ. १८ P वसंताग्नौ मग्ना. १९ P वद(?)भागी. २० T p भवतु. २१ P p विषमविशिखो (षो). २२ P तुही चेति व्यक्तं. p तुही वेति. २३ P p °निकरहुंकार°.

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदिताच्छून्यनयनाः[1] ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ ३५

शापादपि इति तत्र मेघदूतकाव्यमुदाहरणम्[2] ॥

अन्येषां तु मते दैवकृताद्यो बहवो भेदाः संभवंति[3] । ते चास्माभिरस्मिन्ग्रंथे विस्तरभयान्नोक्ताः[4] । तथापि दिङ्मात्रमुदाह्रियते । यथा रामः ।

हं हो मारुतनन्दनादिश विभो दृष्टा त्वया जानकी
दृष्टा जीवति जीवति प्रियतमा मां शोचते शोचते ।
मद्विच्छेदकृशा[5] कृशा वदति किं हा राम हा लक्ष्मणा-
भिज्ञानं प्रहितं किमस्ति सुतरामास्ते स चूडामणिः ॥ ३६

यथा[6] वा ।

देव्याः संततबाष्पवारिपटलच्छन्नेक्षणायाः करं
चूडारत्नसमर्पणाय बहुशो जातं वृथैवान्यतः ।
भ्राम्यन्तं पतदश्रुपूरितदृशो दृष्ट्वा ममाप्येकत-[7]
स्तत्रत्यैश्च निशाचरैरपि निजस्वामी चिरं निन्दितः ॥ ३७

हि विरहाद्यनन्ता भेदाः स्वयमूहनीयाः ॥

अथ हास्यस्य लक्षणमाह ।

विकृताकृतिवाग्वेषैरात्मनो वा परस्य वा[8] ।
हासस्य परिपोषः[9] स्याद्धास्यस्त्रिप्रकृतिः स्मृतः ॥ ३८

आत्मस्थान्विकृतवेषादीन्[10]परस्थान्वा विभाव्य परिपोषात्मा[11] स हास्यरसो द्व्यधिष्ठानः[12] त्रिप्रकृतिस्थो भवति । उत्तममध्यमाधमप्रकृतिभेदात् । एवं षड् भेदा भवन्ति । तथाह भरतः ।

स्मितमथ हसितं[13] विहसितमुपहसितं चापहसितमतिहसितम् ।
द्वौ द्वौ भेदौ स्यातामुत्तममध्यमाधमप्रकृतिस्थौ ॥ ३९
स्मितहसिते ज्येष्ठानां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितं तथातिहसितं च विज्ञेयम् ॥ ४०

---

१ B T p °रुदितोच्छूनं (?) २ P °काव्योदाह°. ३ P reads दैवकृताद्यो भेदा [ब]हु सन्ति. ४ P तदत्रास्माभिः ग्रंथविस्तर°. T p यदत्रास्माभिः ग्रन्थे विस्तर°. ५ T त्वद्विश्लेष° (?) ६ P अथ. ७ P मया.° ८ P आत्मनश्च परस्य च. ९ B हासः सपरितो(पो)षः. १० P °कृताकृतिवाग्वेषान्पर°. ११ B T p परितोषात्मा. १२ B T p अधिकस्थानः. १३ P स्मितं हसितं. B स्मितहसितविहसित.°

अथ प्रत्येकस्य लक्षणमाह[1] । उत्तमानाम्[2] ।

ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥ ४१
उत्फुल्लाननेत्रं तु[3] गंडैर्विकसितैस्तथा ।
किंचिल्लक्षितदंतं हि हसितं तद्विधीयते[4] ॥ ४२

अथ मध्यमानाम्[5] ।

आकुंचिताक्षिगंडं यत्सुस्वनं[6] मधुरं तथा[7] ।
कालागतं सास्यरागं तद्वै विहसितं भवेत्[8] ॥ ४३
उत्फुल्लनासिकं यत्तु[9] जिह्मदृष्टिनिरीक्षणम् ।
निकुंचितांसकशिरस्तच्चोपहसितं[10] भवेत्[11] ॥ ४४

अथाधमानाम् ।

अत्यंतहसितं यत्तु साश्रुनेत्रं तथैव च ।
उत्कंपितशिरश्चैव तच्चापहसितं भवेत् ॥ ४५
संरब्धसाश्रुनेत्रं[12] च विकृष्टस्वरमुद्धतम् ।
करावगूढपार्श्वं[13] च तच्चातिहसितं भवेत् ॥ ४६

तत्र[14] आत्मस्थो यथा । सीतापहरणाय[15] कृततपस्विवेषो रावणः ।

जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं
हारो वक्षसि यज्ञसूत्रमुचितं क्लिष्टा[16] जटाः कुन्तलाः ।
रुद्राक्षैर्मणिभूषणानि मृदुलं चित्रांशुकं वल्कलं
सीतालोकनहारि कल्पितमहो रम्यं वपुः कामिना[17] ॥ ४७

तत्र[18] परस्थो यथा ।

भिक्षो[19] कंथा श्लथा ते ननु शफरवधे जालमश्नासि मत्स्यां-
स्तेऽमी मद्योपदंशा पिबसि मधु समं वेश्यया यासि वेश्याम्
दत्त्वारीणां गलेऽङ्घ्रिं क्व च तव रिपवो भित्तिभेत्तासि येषां
चौरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥ ४

[ भिक्षो[20] मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना
मद्यं चापि तव प्रियं प्रियमहो वेश्याङ्गनाभिः समम् ।

---

१ P reads इत्थं षड्विधस्य हास्यस्य प्रत्येकं लक्षणमाह. २ B om उत्तमानाम्. ३ T °ननेत्रांबु. ४ T सास्यरागं विधीयते. ५ P p om अथ मध्यमानाम्. ६ T °स्वरं. ७ p यथा. ८ B मतम्. ९ P यच्च. १० P निकुंचितं सर्वशिर.° ११ P मतम्. १२ B T p संरब्धं साश्रु.° १३ B °रावगाढ.° १४ P तथा. १५ B T p om सीतापहरणाय and ins सीताहरणाय after रावणः. १६ B T श्लिष्टा. १७ B T कामिनाम्. १८ P om तत्र. १९ B T p give this stanza. २० P gives this stanza.

वेश्या द्रव्यरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽस्ति भवतो भ्रष्टस्य कान्या गतिः ॥ ४८]

उत्तमाधममध्यमेषु ये हास्यभेदाः[1] कथिता एवं मुख्यतया षड्भेदाः। अन्ये भेदाः स्वयमूहनीयाः ॥

अथ करुणरसस्य लक्षणमाह[2]।

इष्टनाशादनिष्टस्य प्राप्तेः शोकस्तु[3] यो भवेत्।
तत्पोषस्तु विनिर्दिष्टो विद्वद्भिः करुणः खलु[4] ॥ ४९

इष्टनाशाद्यथा।

अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ ५०

अनिष्टावाप्तेर्यथा। चंडकौशिके श्मशानवासी हरिश्चन्द्रो ब्राह्मणाय विक्रीतं[5] पुत्रं स्मृत्वा।

धात्रीजनांकशतदुर्ललितः[6] कथं नु
भूमौ चिरं लुठसि वत्स विरूढनिद्रः।
त्वामद्य पार्थिवशतैरभिनन्दिताज्ञ-
माज्ञापयंति बटवः श्रुतिदर्दुरूढाः[7] ॥ ५१

यथा वा। शक्त्यंके[8] शक्तिभिन्नं लक्ष्मणं दृष्ट्वा रामः।

गतप्राया रात्रिर्हिमवति गिरौ द्रोणशिखरं
गता वत्सस्यैते[9] गलकनलके किंचिदसवः।
हनूमानप्यार्यः क्षितिनिहितगात्रः किमपरं
विधिर्वामारंभस्तदपि च मनो वांछति सुखम् ॥ ५२

पुनरंजलिं बद्ध्वा रामः।

मातर्यामिनि संनिधेहि[10] करुणं दीर्घीभवाभ्यर्थये
भ्रातः संतमस स्थिरीभव चिरं ज्योतींषि खे नन्दताम्[11]।
मा यासीरुदयं[12] दयां कुरु रवे त्राता त्वमस्मत्कुले
वत्सो जीवतु लक्ष्मणोऽरुण[13] मनाङ् मन्दं नय स्यन्दनम् ॥ ५३

अथ रौद्रस्य लक्षणमाह।

वैरिणो विकृतेश्चैव मात्सर्यादपि जायते।
यः क्रोधस्तस्य पोषस्तु रसो रौद्र उदाहृतः[14] ॥ ५४

---

१ P हास्यस्य भेदाः. २ B p करुणलक्षण.° ३ P शोकश्च. ४ P reads पोषस्तस्य तु विद्वद्भिः करुणः कथ्यते खलु. ५ T ब्राह्मणयज्ञविक्रीतं. ६ P °दुर्ललितं. ७ B श्रुतदुर्विरूढाः. P श्रुतदुर्गरूढाः ८ B om शक्त्यंके. ९ B °स्यैके. १० T p °विधेहि. ११ P नन्दतः (त). १२ B मा यासीः सदयं. P मायासी हृदयं (?) १३ P लक्षणो गुरु (?) १४ P पोषः स रसो रौद्र उच्यते.

वैरिणो विकृतेर्यथा । वेणीसंवरणे भीमः[1] ।

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु[2] च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशा-
न्स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥ ५५

मात्सर्याद्यथा । प्रबोधचन्द्रोदये क्षपणककृतां स्वधर्मनिन्दामाकर्ण्य क्रुद्धः[3] कापालिकः ।

तन्न मर्षणीयमस्य[4] दौरात्म्यम् । ( इति खड्गमाकृष्य )

एतत्करालकरवालनिकृत्तकण्ठ-
नालोच्छलद्बहलबुद्बुदफेनिलौघैः[5] ।
सार्धं डमड्डमरुडांकृतिहूतभूत-
वर्गेण भर्गगृहिणीं रुधिरैर्धिनोमि ॥ ५६

अथ वीररसस्य लक्षणमाह ।

उत्साहो यः समुत्पन्नः प्रतापविनयादिभिः ।
तस्य पोषस्तु कथितो रसो[6] वीरो विचक्षणैः ॥ ५७
दयायां समरे चैव तथा दानविधावपि ।
स च त्रिधैव कथितो मुनिभिर्भरतादिभिः ॥ ५८

दयावीरो यथा । कविकंकणस्य ।

अकरोत्तृणमिव जीवं पूर्वं जीमूतवाहनः कृपया ।
तृणमपि जीवं कुरुते लोकः सत्त्वात्परिभ्रष्टः ॥ ५९

युद्धवीरो[7] यथा[8] । हनुमन्नाटके शक्रजिद्वदति[9] ।

क्षुद्राः संत्रासमेनं[10] विजहत हरयो भिन्नशक्रेभकुंभाः
युष्मद्गात्रेषु[11] लज्जां दधति[12] परममी सायका निःपतंतः[13] ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभंगलीलानियमितजलधिं[14] राममन्वेषयामि ॥ ६०

दानवीरो यथा ।

लक्ष्मीपयोधरोत्सङ्गकुंकुमारुणितो हरेः ।
बलिरेव स येनास्य भिक्षापात्रीकृतः[15] करः ॥ ६१

---

१ P om वेणीसंवरणे भीमः. २ B T p विकृतिभयेषु. ३ P रुद्धः. ४ P मर्षयेऽस्य. ५ P °बहलफेनिलबुद्बुदौघैः. ६ B T p om from रसो up to कथितो. ७ B T p om युद्धवीरो. ८ After this B T p ins वा. ९ P om हनुमन्नाटके शक्रजिद्वदति. १० P °मेते. ११ P °देहेषु. १२ B T दधत (?) १३ T p संपतंतः. १४ P [illegible] भलीलां. १५ P स एव स्याद्भिक्षापात्रे कृतः.

प्रतापविनयादिभिः इत्यादिशब्दात्[1] प्रतापविनयजो यथा ।

अयं कण्ठः कुठारस्ते कुरु राम यथोचितम् ।
गवाग्रजन्मनां तात न शूरा रघुवंशजाः[2] ॥ ६२

अध्यवसायजो यथा ।

पृथ्वि स्थिरा भव[3] भुजंगम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं[4] दधीथाः ।
दिक्कुंजराः कुरुत तत्त्रितये दिधीर्षां
रामः करोति हरकार्मुकमाततज्यम् ॥ ६३

एवमन्यदनुसर्तव्यम्[5] ॥

अथ भयानकस्य लक्षणमाह ।

विकृतस्वनसत्त्वादेर्भयपोषो भयानकः ।
सर्वाङ्गवेपथुस्वेदशोषवैवर्ण्यलक्षणः ॥ ६४

विकृतस्वनाद्यथा । भेरीझांकारस्य ।

कोशान्सौधेषु[6] मुञ्चन्पथि करितुरगान्बान्धवानर्धमार्गे
दुर्गेष्वन्तःपुराणि प्रतिरवचकिताः पर्वतेभ्यो निवृत्ताः ।
यस्योद्योगे भ्रमन्तः समसमयसमारंभगंभीरभेरी-
झांकाराकीर्णकर्णज्वरभरतरलप्रेक्षिताशाः[7][8] क्षितीशाः ॥ ६५

विकृतसत्त्वाद्यथा । रत्नावल्याम् ।

नष्टं वर्षधरैर्मनुष्यगणनाभावादपास्य त्रपा-
मंतः कंचुकिकंचुकस्य विशति त्रासादयं वामनः ।
पर्यंताश्रयिभिर्निजेन[9] सदृशं नाम्ना[10] किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशंकिनः ॥ ६६

यथा वा[11] शाकुन्तले ।

ग्रीवाभंगाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः[12] श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ६७

अथ बीभत्सस्य[13] लक्षणमाह ।

पूतिमांसा[14]स्थिदुर्गंधजनिता या भवेत्पुनः ।
जुगुप्सा कथितः[15] पोषस्तस्या[16] बीभत्ससंज्ञकः ॥ ६८

---

१ P इतिशब्दात्. २ P T p रघवो वयम्. ३ p स्थिरीभव. ४ B द्वितीयं (?) ५ p °मनुसर्तव्यम्. ६ P कोशानंधेषु. T °न्सौधोष्ठमुंचन् (?) p °न्सौधेष्वमुं°. ७ P °कारा° कर्णकीर्णज्वर.° ८ P °प्रेक्षितास्ते. ९ P °र्निजस्य. १० P नाम्नः. ११ P च. १२ T p दर्भैरर्धा.° १३ T p बीभत्सरसस्य. १४ T कृत्तिमासा°. १५ B T p कथिता (?). १६ P

यथा मालतीमाधवे ।

उत्कृत्योत्कृत्य कृत्तिं प्रथममथपृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा[१] ।
अन्तः[२] पर्यस्तनेत्रः प्रकटितदशनः प्रेतरंकः करंका-
दंकस्थादस्थिसंस्थं स्थपुटगतमपि[३] क्रव्यमव्यग्रमत्ति ॥ ६९

यथा वा[४] चण्डकौशिके हरिश्चन्द्रेण[५] शववर्णनं कृतम् ।

भिनत्त्यक्ष्णोर्मुद्रां शिरसि चरणं न्यस्य करटः
शिवा सृक्वोपांते[६] ग्रसति रसनाग्रं विलुलितम्[७] ।
भिनत्ति[८] श्वा मेढ्रं प्रथयति च गृध्रोऽत्र विवरं
यथेष्टव्यापारस्त्वयि[९] कुणपक श्वापद्गणः[१०] ॥ ७०

एवमुद्वेगदायि अतिशयनिन्द्यं च यत्सर्वं तत्स्वयमुत्प्रेक्षणीयम्[११] ॥

अथाद्भुतस्य[१२] लक्षणमाह ।

लोकोत्तरैश्च चरितैर्विस्मयो[१३] योऽभिजायते[१४] ।
तस्य पोषस्तु कथितो रसो ह्यद्भुतसंज्ञकः[१५] ॥ ७१

यथा ।

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्याप्तकपालसंपुटमिलद्ब्रह्मांडभांडोदर-[१६]
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ ७ः

इत्यद्भुतस्य[१७] लक्षणम् । इत्येतानि सर्वेषां रसानां लक्षणानि ॥

इति श्रीमन्महाराजाधिराजश्रीहम्मीरराजात्मजश्रीमदल्लराजविरचितायां रसरत्न-
प्रदीपिकायां रसलक्षणं नाम पंचमः परिच्छेदः ॥ ५ ॥

---

अथ हावस्य लक्षणमाह ।

शृंगारभावजा चेष्टा हावस्तु कथितो बुधैः ।

तत्र स्त्रीणाम् ।

लीला विलासो विच्छित्तिः विभ्रमः किलकिञ्चितम् ॥ १

---

१ B T °सुलभान्यत्ति जग्ध्वाथ तानि. २ P आर्तः. ३ T B स्वतनुगतमपि. ४ P om वा. ५ P om from हरिश्चन्द्रेण up to कृतम्. ६ P शुष्कोवांते (?) B T p चेष्टोपांते. ७ P विलुठितम्. ८ P छिनत्ति. ९ P °व्यापारास्त्वयि. १० P कुणप यच्छ्वापद्गणाः. ११ P reads एवमुद्वेगदायी अतिशयानिंद्यः स्वयमुत्प्रेक्ष्यः. १२ T p °द्भुतरसस्य. १३ P लोकांतरैस्त्वरचितैः° (?) १४ P यो विजायते (?) १५ P रसस्त्वद्भुत°. B रस अद्भुत° (?) १६ P द्राक्पर्यस्तकपालसंपुटमितब्रह्मांड°. १७ P om from इत्यद्भुतस्य up to लक्षणानि.

मोट्टायितं कुट्टमितं बिब्बोको[1] ललितं तथा ।
विहृतं चेति विज्ञेया दश हावास्तु योषिताम् ॥ २

तत्र[2] लीलालक्षणमाह ।

वाग्विभूषणचेष्टाभिः प्रियस्यानुकृतिस्तु या ।
सा लीलेति[3] परिज्ञेया स्त्रीणां भावविचक्षणैः ॥ ३

यथा कविकंकणस्य ।

लीलापङ्कजमादधाति रुचिरे गम्भीरनाभ्यन्तरे
कस्तूरिद्रवचर्चितं वपुरपि श्यामीकरोत्यादरात् ।
ताटंकं च करे करोति कुतुकाच्चक्रानुकारं तथा
लक्ष्मीः क्रीडति पीतवस्त्रकलिता स्मित्वा सखीनां पुरः ॥ ४

अथ विलासस्य लक्षणमाह ।

यानस्थानासनादीनां नेत्रवक्त्रादिकर्मणाम् ।
उत्पद्यते विशेषो यः स विलासः प्रियान्तिके ॥ ५

यथा[4] ।

यद्यपि गुरुजनपुरतः सततं विनिवार्यते ह्रिया[5] चक्षुः ।
प्रियमुखदर्शनलुब्धं तदपि सलीलं बलाद्वलति ॥ ६

यथा वा कविकंकणस्य ।

हित्वा नर्मकथां सखीविरचितां क्षिप्त्वा दृशं व्यायता-
मेणाक्ष्या सहसा[6] विलुंठनपदं[7] किंचित्पुरः सारितम्[8] ।
उत्थायेक्षणपल्लवेन शनकैर्मां च स्पृशंत्या तया
किंचिद्वक्रितदेहभंगसुभगं तन्व्या ममाग्रे स्थितम् ॥ ७

अथ विच्छित्तेर्लक्षणमाह ।

अनादरेण[9] विन्यासो मंडनाभरणस्रजाम् ।
कृतः[10] करोति सौभाग्यं सा विच्छित्तिरुदाहृता ॥ ८

यथा कविकंकणस्य ।

माल्यं स्कन्धविलम्बितं च निहितं केशे दृशोरंजनं
स्थूलप्रांतविनिर्मितं[11] च हृदये हारस्तु तिर्यग्धृतः ।
कूर्पासस्य च बीटिकांगुलिमुखैर्नायोजिता[12] यद्यपि
प्रायोऽस्यास्तदपि स्फुरत्यभिनवा शोभैव लोकोत्तरा ॥ ९

---

१ B बिब्बोकं. p विलोकं. २ After this P ins स्त्रीणां. B reads only तंत्र लीला. ३ P लीला सेति. ४ P om यथा. ५ P गिरा. p भिया. T om ह्रिया. ६ B हसता. ७ B T p विलुंठनपरं. ८ p °त्पुरः स्सारितम्. ९ B अत्यादरेण. १० P क्षतः (?) ११ P स्थूलं प्रीतविनि°. १२ P T p °खैर्नो योजिता.

अथ विभ्रमस्य लक्षणमाह ।

वागंगभूषणानां यः काले स्थानविपर्ययः[1] ।
प्रमदामदरागोत्थः[2] स सतां विभ्रमो मतः ॥ १०

यथा[3] ।

श्रुत्वाऽऽयातं[4] बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥ ११

अथ किलकिञ्चितस्य लक्षणमाह ।

श्रमाभिलाषगर्वाणां[5] स्मितहर्षभयक्रुधाम् ।
असकृत्संकरः प्राज्ञैर्विज्ञेयं किलकिञ्चितम् ॥ १२

यथा ।

पाणिपल्लवविधूननमन्तःसीत्कृतानि नयनार्धनिमेषाः ।
योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥ १३

अथ मोट्टायितस्य लक्षणमाह ।

प्रियानुरागवार्तायां हेलालीलानिदर्शने ।
तद्भावभावनोद्भूतं स्मृतं मोट्टायितं बुधैः ॥ १४

यथा ।

तव सा कथासु परिघट्टयति[6] श्रवणं यदङ्गुलिमुखेन मुहुः ।
घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥ १५

अथ कुट्टमितस्य लक्षणमाह ।

सानंदा तु मृषा कुप्येत्कुचकेशाधरग्रहैः ।
दुःखेऽपि सुखदा चेष्टा ज्ञेयं कुट्टमितं हि तत् ॥ १६

यथा कविकंकणस्य ।

आकुंच्याग्रं नखविलिखने पश्यति भ्रूविभङ्ग्या
गाढाश्लेषे वदति च[7] ह हा मुञ्च मुञ्चेति वाचम् ।
केशाकृष्टावरुणनयना ताडने साश्रुनेत्रा
नसनाभावं श्रयति तरुणी नाटके मन्मथस्य ॥ १७

अथ बिब्बोकस्य लक्षणमाह ।

गर्वाभिमानसंभूतो[8] विकारोऽनादरात्मकः ।
यः स्यात्प्राणाधिनाथेऽपि[9] स बिब्बोक इति स्मृतः ॥ १८

---

१ B T p कालस्थान°. २ P प्रमदामंदरागोत्थः. ३ P om यथा. ४ B T p दृष्ट्वायांतं. ५ P °लाषवर्गाणां. ६ p °वर्तयति. ७ P ह. ८ P °संतापो. ९ B T p यस्मात्प्राणा°.

यथा ।

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥ १९

अथ ललितस्य लक्षणमाह ।

करांगचरणन्यासः सुकुमारतया कृतः ।
भ्रूनेत्राधरसंचारमसृणो ललितं स्मृतम् ॥ २०

यथा ।

गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा[1] ।
इतरदनतिलोलमादधाना[2] पदमथ मन्मथमंथरं जगाम ॥ २१

अथ विहृतस्य लक्षणमाह ।

व्याजस्वभावलज्जाभ्यो भाषणावसरेऽपि यत् ।
स्त्रीणामभाषणं प्राज्ञैर्विहृतं तदुदाहृतम्[3] ॥ २२

व्याजाद्यथा ।

एकत्रासनसंस्थितिः[4] परिहृता प्रत्युद्गमाद्दूरत-[5]
स्तांबूलानयनच्छलेन[6] रभसाऽऽश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयंत्या तया[7]
धूर्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ २३

लज्जया यथा ।

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रंजयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥ २४

अथ रसविवेकः क्रियते[8] ।

प्राचीनवासनायुक्ताप्यंगविद्याभिराश्रिता ।
बुद्धिर्या हृदयं तां च कथयन्ति[9] विचक्षणाः ॥ २५
एवं सहृदयानां च सुखीनां स्थिरचेतसां ।
नियतं वासनारूपो रसस्तिष्ठति मानसे ॥ २६
तद्बीजबोधकान्भावानधिगम्य जनैः कृतान् ।
आस्वाद्यमानो मधुरो रसो व्यक्तः प्रजायते ॥ २७

अथ रसानां वर्णानाह ।

शृंगारः श्यामवर्णः स्यात्सितो हास्यः प्रकीर्तितः ।
कपोतवर्णः करुणो रक्तो रौद्रः प्रकीर्तितः ॥ २८

---

१ P सुललितं. २ P °दनतिलोक°. ३ B T p तज्ज्ञैर्विहृतं समुदाहृतम्. ४ T p °सनसंगतिः. ५ p पत्युद्गमे दूरत°. ६ P °हरणच्छलेन. ७ P °रयंत्यान्तिके. ८ B अथ विवेकः क्रियते. P रसविवेकक्रिया. ९ B T p नाम तद्वदन्ति.

गौरो वीरस्तु विज्ञेयः कृष्णश्चैव भयानकः ।
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ॥ २९

अथ रसानां रससंज्ञा कथमित्याह ।

यथा च द्रव्यसंयुक्तै[1]र्व्यंजनैर्बहुभिर्युतम् ।
आस्वादयंति भुंजाना भक्तं भक्तविदो जनाः[2] ॥ ३०
भावाभिनयसंबद्धान् स्थायिभावांस्तथा नराः ।
आस्वादयंति मनसा तस्मान्नाट्ये रसाः स्मृताः ॥ ३१

एतेषु[3] रसेषु चत्वारः कारणरूपाश्चत्वारः कार्यरूपा भवन्ति । तथाह[4] ।

शृंगारात्तु[5] भवेद्धास्यो रौद्राच्च करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च[6] भयानकः ॥ ३२

एवं सत्यपि[7] एतेषां जन्यजनकत्वव्यभिचारो दृश्यते । तथाह[8] ।

कथानुग्रहयोगाच्च[9] विवक्षावशतः कवेः ।
अन्योन्यजन्यजनका[10] रसा भावा भवन्त्यमी ॥ ३३

अस्यायमर्थः[11] । कुत्रचित्प्रबंधारूढकथाप्रसंगात्[12] कवेर्विवक्षावशतश्च व्यभिचारिषु व्यभिचार्यंतरं दृश्यते । रत्यादिषु भावेषु भावांतरं रसेषु रसांतरं च ।

प्रबंधारूढकथाप्रसंगाद्यथा । कादंबर्यां महाश्वेतापुंडरीकयोः[13] अन्योन्यदर्शनविप्रलंभशृंगारैकरसे[14] पुंडरीकमरणान्मित्रस्य करुणः[15] ।

कवेर्विवक्षावशतो यथा ।

शृंगारः कलकूजितेषु करुणो दैन्ये द्रवे विस्मयो
रौद्रो हुंकरणे स्मितं पतिमुखे निश्चेष्टतायां भयम् ।
वीरस्तीक्ष्णनखार्पणे श्लथजवे कुत्सा प्रशान्तः सुखे
तन्वंग्याः सुरतोत्सवे नव रसाः सान्निध्यमातन्वते ॥ ३४

इत्यादौ शृंगाररसे रसांतराविर्भावः । एवं भावेषु भावान्तरं स्वयमूहनीयम् ॥

अथैतेषां[16] विरोधानाह[17] ।

शृङ्गारबीभत्सरसौ तथा[18] वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥ ३५

---

१ T p यथावद्द्रव्यसंयुक्तै°. २ P विदुः (?) ३ After this P ins च. ४ B T p तथा हि. ५ B T p शृंगाराच्च. ६ P वीरात्स्यादद्भुतो°. ७ B p सति. ८ B तथा. ९ B T p कथानुयोगाच्च. १० B °जनकरसा. ११ B T p अस्यार्थः. १२ B T p °प्रसंगेन. १३ B महासेनपुंड°. १४ P °दर्शनाधिगतविप्रलंभशृंगार. १५ P °मरणान्मित्रशापात् कपिंजलस्य करुणा. १६ P om अथ. B T p एषां ( for एतेषां ). १७ P विरोधमाह. १८ P om तथा.

एकत्र वारणा सम्यग्रसहानश्च[1] कारणम् ।
प्रतिपाद्यो यस्तु रसस्तमेव परिपोषयेत् ॥ ३६
न तु वैरिरसं ब्रूयाद्वैरिणां नानुभावकम्[2] ।
न विभावं च संचारिभावं[3] नैव कदाचन ॥ ३७

यथा ।

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ ३८

अत्र शृङ्गारबीभत्सरसौ[4] मिथो[5] वैरिणौ एकत्र प्रतिपादितौ रसहानिमेव[6] कुरुतः ।

अन्यच्च रसवैरस्योत्पादकं[7] वचनं तु यत्[8] ।
न वाच्यं रसभावज्ञैर्नाट्यशास्त्रविशारदैः[9] ॥ ३९

यथा[10] ।

विमुंचामुं मानं सफलय वचः साधु सुहृदां
मुधा संतापेन ग्लपयसि किमंगं स्मरभुवा ।
प्रियं पादप्रांतप्रणतमधुना[11] मानय भृशं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ४०

अत्र गता दिवसाः पुनरपि नायास्यन्ति इति निर्वेदं व्यक्तीकुर्वद्वचनं[12] वैरस्यमापादयति इति । एवंप्रायं शृङ्गारवैरस्यवचनं[13] रसहानिकारणं न वाच्यम् । एवं सर्वेषु भावेषूहनीयम्[14] ॥

वैरिणौ चांगरूपेण[15] तिष्ठतोऽन्यस्य कस्यचित् ।
रसस्य तत्र नो हानिर्ज्ञातव्या सुविचक्षणैः ॥ ४१

यथा राजसमीपे तिष्ठतोर्द्वयोर्वैरिणोर्विरोधो न प्रवर्तते[16] तथान्यस्यांगभूतयो रसयोः । यथा ।

शृंगारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुंगया ।
रौद्रो दक्षविमर्दने च[17] हसकृन्नग्नः प्रशांतः शमा-[18]
दित्थं सर्वरसात्मकः पशुपतिर्भूयात्सतां भूतये ॥ ४२

---

१ P °हानेस्तु. २ P नाम भावकं. ३ P °भावे (?) ४ P °बीभत्सौ. ५ P om मिथो. B T p read मिथो वैरिणौ after एकत्र. ६ P °हानिं. ७ B °च्चापि स वैरस्यो° ८ P तथा. p यथा. ९ P °विचक्षणैः. १० B T p यथा वा. ११ P °प्रांते प्रणत°. १२ Mss °कुर्वन्वचनं. १३ P om शृंगारवैरस्य°. १४ P रसेषू°. १५ P वैरिणोरंग°. १६ P प्रभवति. १७ B p दक्षविमर्दनेन. १८ P °शांतश्चिरा°.

अत्र सज्जनानां रतेरंगतया विहिता ईश्वररतिः[1] । तस्या अंगतया रसाः । इत्थं[2] स्वयमूहनीयाः ॥

अनौचित्यादृते नान्यद्रसभंगस्य कारणं[3] ।
प्रसिद्धौचित्यबन्धस्तु[4] रसस्योपनिषत्परा[5] ॥ ४३

इति पुराणाचार्याः पठन्ति[6] । अस्यायमर्थः[7] । यत्रौचित्यं[8] वर्तते कविसमयस्वीकृतं[9] तदेव रसपोषं कुरुते । अन्यथा रसवैरस्यमेव[10] । एतेन द्वयोर्यूनोर्यत्र[11] रतिस्तत्रैव रसः । अन्यथा रसाभास[12] एव । यथा सीतायां रावणस्यानुरागवर्णनं रसाभास एव भवति[13] । यथा[14] ।

ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः ।
वीणां संहर नारद स्तुतिकथालापैरलं तुम्बरो
सीतारल्लकभल्लभग्नहृदयः[15] स्वस्थो न लंकेश्वरः ॥ ४४

केवलं योषिदनुरागाद्यथा[16] ।

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसा-
न्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ४५

एवं एकस्याः कामिन्या अनेककामुकविषया रतिः रसाभास एव । यथा ।

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे[17] ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ ४६

एवं एकस्य पुरुषस्य अनेकासु कामिनीषु अनुरागः रसाभास एव । यथा ।

श्लिष्यति कामपि चुंबति कामपि कामपि रमयति रामां ।
पश्यति सस्मितचारु परा[18]मपरामनुगच्छति वामाम् ॥ ४७

यदि पुनर्बहुषु कामिनीषु एकस्य पुरुषस्योपभोगे[19] प्रतिपाद्यमाने एकस्यामनुरागो ध्वन्यते तदा रस एव[20] स्यात् । यथा । अद्य राज्ञा का उपभोक्तव्या इति केनापि पृष्टः कञ्चुकी तमाह ।

---

१ B T p read ईश्वररचितस्यांगतया. २ P om इत्थं°. ३ P लक्षणं. ४ B P °चित्यवद्वस्तु. ५ P रसहर्षो हि जायते(?) ६ P पुराचार्या वदन्ति. ७ B T p अस्यार्थः. ८ P अत्रौ°. ९ B p °समये स्वीकृतं. १० P वैरस्यमेव. ११ P द्वयोरेव यूनो°. १२ P रसाभाव. १३ B T p om भवति. १४ After this p repeats the sentence सीतायां रावणस्य etc. १५ P सीतामन्मथबाणभिन्न°. १६ P केवलयोषिदनुरागे. १७ B यं न रमसे. p येन रमसे. १८ P p T सस्मितचारुतराम°. १९ B om पुरुषस्य. २० B एवैकः.

ख्याता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्थंतःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते[1]
देवेनाप्रतिपत्तिशून्यमनसा द्वित्राः स्थितं नाडिकाः ॥ ४८

अत्रान्यासु व्यवहारमात्रप्रतीतेः[2] द्यूतविजितरात्रौ[3] कमलायामनुरागो[4] व्यज्यते[5] इति रसः ॥

अधुना रसभावालंकाराणां मुख्यताभिव्यक्तिः क्रियते[6] ।

मुख्यो रसस्तु सर्वत्र तत्र भावस्य मुख्यता[7] ।
रसो यत्र तदंगं स्याद्विवक्षावशतः खलु ॥ ४९
अलंकारे सुरुचिरे चित्तनिर्वृतिकारिणि[8] ।
अलंकारस्य मुख्यत्वं गौणयो रसभावयोः ॥ ५०

रसप्रकरणे यान्युदाहरणानि दर्शितानि तेषु सर्वेषु सत्यपि भावालंकारे रसो मुख्यः । सति रसे भावस्य मुख्यता । यथा ।

मल्लैः शैलेन्द्रकल्पः शिशुरितरजनैः पुष्पचापोऽङ्गनाभिः
गोपालैः[9] प्राकृतात्मा दिवि कुलिशभृता विश्वरूपोऽप्रमेयः[10] ।
क्रुद्धः कंसेन कालो भयचकितदृशा योगिभिर्ध्येयमूर्ति-
र्दृष्टो रंगावतारे मुररिपुरमरानन्दनः[11] पातु युष्मान् ॥ ५१

अत्र रसाः कविगतरतिभावस्यांगतया[12] स्थिताः । मल्लैः[13] पर्वततुल्यो दृष्टः इत्यत्र वीरो रसः । योगिभिरित्यत्र शान्तो रसः ॥

सत्यपि रसभावेऽलंकारस्य[14] मुख्यता । यथा ।

अवाप्तः प्रागल्भ्यं[15] परिणतरुचः शैलतनये
कलंको नैवायं विलसति शशांकस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यंदशिशिरे[16]
रतश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ५२

अत्र स्थितेऽपि शृंगाररसे अपह्नुतेरलंकारस्य चित्तविश्रांतिहेतुत्वान्मुख्यता ॥

यथा वा । रसापेक्षया अलंकारस्य मुख्यत्वे तदलंकारापेक्षया भावस्य मुख्यत्वोदाहरणम्[17] ।

---

१ B विज्ञापितं कैतवात्. २ P °प्रतिपत्तेः. ३ P द्यूतजितायां रात्रौ. ४ P कमलायामेवानु°. ५ P विद्यते. ६ B om from अधुना up to क्रियते. ७ B मुख्यत्वम्. ८ B °विश्रान्तकारिणि. ९ P गोपैश्च. १० P विश्वकायो°. ११ P हरिरमरजनानन्दनः. १२ B कवेराजगतिरति°. १३ B om from मल्लैः up to शान्तो रसः. १४ B भावेऽलंकारस्य. १५ B अवाप्तप्रागल्भ्या. १६ B °स्यंदि°. १७ B °त्वे उदाह°.

आलानं जयकुंजरस्य विदुषां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचंडमहसो लीलोपधानं[1] श्रियः ।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मंदरो
राजन् राजति वैरिवीरवनितावैधव्यदस्ते[2] भुजः ॥ ५३

अत्र रतिभावस्यांगतया रूपकालंकारः तदंगतया[3] वीरो रसः ॥

शान्तं[4] रसं च नवमं केचिदिच्छन्ति साधवः ।
न तं च केचिदिच्छन्ति शून्यत्वात्तस्य सर्वथा ॥ ५४
नीरसा ये जना लोके ते च शान्ता इति स्मृताः ।
रसत्वं नास्ति शान्तस्य तस्मादेवं मुनेर्मतम् ॥ ५५

मुनिना भरतेन अष्टावेव[5] रसा गणिताः ।

केचिदेनं हि निर्वेदं वदन्ति व्यभिचारिणं ।
वैराग्यादेव निष्पत्तिः रसप्रायो[6] भवेद्यतः ॥ ५६

तथा हि । नानाविषयदोषदर्शनेनानेकधासमुद्विग्नदुःखितचित्तनिर्वापकशमपरिपोषरूपः शान्तो रसः । यत्रानन्दाश्रुबिंदवो भवन्ति । पुलकपटलांकिताशेषं शरीरं कदंबमुकुलमनुकुरुते । हर्षगद्गदवचनं प्रतिक्षणमभिजायते[8] । पुण्यस्थानावलोकनैर्नेत्रोत्सवः कमप्यानन्दान्तरमापादयति[9] । एवंविधैरशेषैः कर्मभिरानंदातिशयो जायते । अतः सर्वसंसारदुःखनिवृत्तिरूपः शान्ताभिधेयोऽस्ति[10] नवमो रसः । यथा ।

अहौ वा हारे वा कुसुमशयने वा दृशादि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वास्तीर्णे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ५७

एवं क्लेशप्रशान्तिरूप एव कारागृहविमुक्तजनसुखवत् शान्तो रसः ॥

वत्सलं तु रसं प्राहुरन्ये[11] सा रतिरेव हि ।

यथा ।

अपत्यालिंगने भावो यः पित्रोरुपजायते ।
सा रतिः कथिता तज्ज्ञैर्वात्सल्यं तच्च कीर्तितम्[12] ॥ ५८

रसत्वं करुणस्येव कथं वा जायते ध्रुवं[13] ।
बीभत्सो दुःखरूपो हि रसत्वं कथमश्नुते ॥ ५९

---

१ B नीलो°. २ B राज विचारवैरिवनिता°. ३ B om रूपकालंकारः तदंगतया. ४ B om from शान्तं up to ते च (in st. 55). ५ P reads अष्टावरे (for अष्टावेव रसाः). ६ B निर्वेदस्तस्मात्प्रायो. ७ P °विषयसमुत्थदोष°. ८ P प्रतिलक्षण°. ९ B कमप्युत्सवांतर°. १० P शान्तोऽस्ति. ११ B वत्सलेन तु संप्राहु°. १२ B तत्प्रकी°. १३ B धृतम्.

तत्राह[1] ।

सुखं हि सुखसामग्र्याज्जायते[2] सत्यमेव हि ।
कुत्रचिद्दुःखसामग्र्यात्सुखमुत्पद्यते ध्रुवम् ॥ ६०
प्रहारो दुःखमूलं हि क्रीडासमयकल्पितः ।
जायते च सुखायैव तद्वत् चरणकुट्टनम्[3] ॥ ६१
खंडनं वाधरस्यैव नखांकानि कुचस्थले ।
इत्थं यत्सुखरूपेण नरो गृह्णाति चेतसा ॥ ६२
जायते[4] च सुखायैव तद्दुःखं तद्वदेव हि ।
सुखं तदेव हि[5] सुखं जायते सुनिरन्तरम्[6] ॥ ६३
सुखं तदेव कथितं नरो यत्र प्रवर्तते ।
दुःखं[7] तदेव कथितं नरो यस्मान्निवर्तते ॥ ६४
अतस्तु लौकिकं यत्तु तदेव दुःखवर्धनं[8] ।
रसरूपं यदेतच्च सर्वं हि सुखसुन्दरम् ।
बीभत्सेऽपि रसे[9] तज्ज्ञैरेवं ज्ञेयं न चान्यथा ॥ ६५
रसनीयं च यद्वस्तु सर्वं तत्सुखमेव च[10] ।
लौकिकं विषयोत्थं हि दुःखेनैव[11] विमिश्रितम् ॥ ६६
तस्मादनंतसुखदं पुण्यकीर्तिप्रवर्धनं[12] ।
भजन्तु सरसा लोका रसं संसारसौख्यदम् ॥ ६७

इति श्रीमन्महाराजाधिराजश्रीहम्मीरराजात्मजश्रीमदल्लराजविरचितायां रसरत्नप्रदीपिकायां रसविवेको नाम षष्ठः परिच्छेदः ॥ ६ ॥

॥ समाप्ता[13] चेयं रसरत्नप्रदीपिका[14] ॥



---

१ B तथा हि. २ B दुःखं. ३ P चरणकूजने. ४ P om from जायते up to तद्वदेव हि. ५ B om सुखं तदेव हि. ६ P हि निरन्तरम्. ७ B om from दुःखं up to निवर्तते. ८ B वदेत्तद्दुःखं. ९ B बीभत्सोऽपि रसः. १० B तद्दुःखमेव हि. ११ B सुखेनैव. १२ B °विवर्धनं. १३ P om समाप्ता etc. १४ At the end P adds: वत्सरे बहुधान्याख्ये नारायणसुधीरिमां । लिलेखाश्विनषष्ठ्यां हि रसरत्नप्रदीपिकाम् ॥ १ ॥ छ ॥

On the last page P reads the following: रसरत्नप्रदीपिकापत्रः

यस्मादत्र निमग्नबाहुज…प्रारब्धरंभोर्वशी-
रंभाह्लादनिवांतनंदनवनक्रीडादराडंबरे ।
दृद्वैप्ये रिविधातजाब्नतटिनीपूरेण(?)संपूरिते
श्रीमत्कृष्णकटारिकाजलनिधौ मज्जंति सर्वे द्विषः ॥
यदुकुलतिलक……वंशकेतुं । गुणगणभूषणभूषितं नितान्तं ॥
विबुधजन…मनोहरं त्वां । पुरुषवरं प्रणतोऽस्मि सुन्दरोऽहम् ॥

# NOTES

[*Nāṭyaśāstra* of Bharata (Nirnayasagar Press, Bombay 1894) = *NS*; *Daśarūpaka* of Dhanaṁjaya (Gujarati Printing Press, Bombay 1927) = *DR*; *Avaloka* on *DR* by Dhanika (Gujarati Printing Press, Bombay 1929) = *DRA*; *Kāvyaprakāśa* of Mammaṭa (BORI, Poona 1933) = *KP*; *Sāhityadarpaṇa* of Viśvanātha (Nirnayasagar Press, Bombay 1931) = *SD*.]

**प्रथमः परिच्छेदः**

St. 5–7—For information about the writers and works mentioned in these stanzas, see Appendix I; also for other works & writers cited in *RRP*.

St. 20–21 = *NS* VI. 44–45; *NS* reads *bībhatsaśca* where MSS. give *bībhatsasya*; *NS* reads *Kāmadevo bhayānakaḥ* while the MSS. give *Kāladevo bhayānakaḥ*.

St. 25 = *NS*.

**द्वितीयः परिच्छेदः**

St. 1—cf. *NS* VII. 1. विभावेनोद्भृतो योऽर्थस्त्वनुभावैश्च गम्यते ।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥

*DR* IV. 4. सुखदुःखादिकैर्भावैर्भावस्तद्भावभावनम् ।

*SD* III. 93. निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ।

also *KP* IV. 36.

St. 2 = *NS* VII. 2.

St. 3—cf. *DR* IV. 43.

St. 4 = *DR* IV. 34; cf. *NS* VII. 8; *SD* III. 174.

St. 5 = *NS* VI. 17; *KP* IV. 30; cf. *DR* IV. 35; *SD* III. 175.

St. 8—The author of the *RRP* considers the problem of *S'ānta rasa* later in ch. VI. 54 ff. He accepts that *rasa*.

St. 9—The *Dhvanyāloka* (pp. 79–80) and Abhinava Gupta in *Locanā* (p. 80) mention *vikāsa*, *dīpti* and *druti* as the three forms of mutation, and connect them with the *rasas* and *bhāvas*.

St. 10–24—*NS* deals with the eight *sthāyibhāvas* in VII. 7 ff.

St. 10—cf. *SD* III. $176^{ab}$.

St. 12—cf. *SD* III. $176^{cd}$.

St. 14—cf. *SD* III. $177^{ab}$.

St. 16—cf. *SD* III. $177^{cd}$.

St. 18—cf. *SD* III. $178^{ab}$.

St. 20—cf. *SD* III. $178^{cd}$.

St. 22—cf. *SD* III. 179.

St. 23—One wonders whether the moral of this stanza can be at all favourable to Allarāja, the author of the *RRP*, who has borrowed so much from *DR* without acknowledgement.

St. 24—cf. *SD* III. 180.

**तृतीयः परिच्छेदः**

St. 1—cf. *DR* IV. 2; *SD* III. 29.

St. 2 = *NS* VI. 47.

St. 3 = *NS* VI. 49; *NS* reads विकृतैरङ्गविकारैः (for °रर्थविशेषैः).

St. 4 = *NS* VI. 62; *NS* reads संश्रवाद्वापि (for संश्रया°).

St. 5 = *NS* VI. 64.

St. 6 = *NS* VI. 67.

St. 7 = *NS* VI. 69.

St. 8 = *NS* VI. 73.

St. $9^{ab}$ = *NS* VI. $75^{ab}$.

St. 10—cf. *DR* IV. 3; *SD* III. $132^{cd}$–$133^{ab}$.

St. 11 = *NS* VI. 48.

St. 12 = *NS* VI. 50.

St. 13 = *NS* VI. 63.

St. 14—cf. *NS* VI. 65.

St. 15 = *NS* VI. 67.

St. 16—cf. *NS* VI. 72.

St. 17 = *NS* VI. 74.

St. 18 = *NS* VI. 76.

St. 19 = *NS* VI. 22; *SD* III. $135^{cd}$–$136^{ab}$. cf. *DR* IV. 5–6.

St. 20–21—cf. *SD* III. 136–140.

St. 25—*KP* quotes this stanza to illustrate अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् (I. 5).

**चतुर्थः परिच्छेदः**

St. 1—cf. *DR* IV. 7; *SD* III. 140.

St. 2–4 = *NS* VI. 18–21; cf. *DR* IV. 8; *SD* III. 141. *NS* deals with the 33 *vyabhicāribhāvas* in ch. VII. 23–84.

निर्वेदलक्षणम् = *DR* IV. $9^{ab}$; *SD* III. $142^{ab}$.

St. 5–7—*DRA* gives these illustrations.

ग्लानिलक्षणम् = *DR* IV. $10^{ab}$; cf. *SD* III. 170.

St. 8—*DRA* gives this illustration.

शंकालक्षणम् = *DR* IV. 11[illegible]; cf. *SD* III. 161.
St. 9–10—*DRA* gives these illustrations.
असूयालक्षणम् = *DR* IV. $17^{ab}$; cf. *SD* III. 166.
St. 11–12—*DRA* gives these illustrations.
मदलक्षणम् = *DR* IV. $21^{cd}$; cf. *SD* III. 146–47.
St. 14—*DRA* gives this illustration.
श्रमलक्षणम्—cf. *DR* IV. $12^{ab}$; *SD* III. 146.
St. 15—*DRA* gives this illustration.
आलस्यलक्षणम्—cf. *DR* IV. $27^{cd}$; *SD* III. $155^{cd}$.
St. 16—*DRA* gives this illustration.
दैन्यलक्षणम् = *DR* IV. $14^{cd}$; cf. *SD* III. $145^{cd}$.
St. 17—*DRA* and *SD* gives this illustration.
चिन्तालक्षणम् = *DR* IV. $16^{ab}$; cf. *SD* III. $171^{ab}$.
St. 18—*DRA* gives this illustration.
मोहलक्षणम् = *DR* IV. $26^{ab}$; *SD* III. $150^{ab}$.
St. 20—*DRA* and *SD* give this illustration.
St. 21—*DRA* gives this illustration.
स्मृतिलक्षणम् = *DR* IV. $20^{ab}$; cf. *SD* III. 162.
St. 24—*DRA* gives this illustration.
धृतिलक्षणम् = *DR* IV. $12^{cd}$; cf. *SD* III. 168.
St. 27–28—*DRA* gives these illustrations.
व्रीडालक्षणम् = *DR* IV. $24^{ab}$; cf. *SD* III. $165^{ab}$.
St. 30—*DRA* gives this illustration.
चपलतालक्षणम्—cf. *DR* IV. 33; *SD* III. 169.
St. 31—*DRA* and *SD* give this illustration.
St. 32—*DRA* gives this illustration.
हर्षलक्षणम्—cf. *DR* IV. $14^{ab}$; *SD* III. $165^{cd}$.
St. 34—*DRA* gives this illustration.
जडतालक्षणम् = *DR* IV. $13^{ab}$; *SD* III. $148^{ab}$.
St. 36—*DRA* gives this illustration.
गर्वलक्षणम् = *DR* IV. $19^{ab}$; cf. *SD* III. 154.
विषादलक्षणम् = *DR* IV. 31; cf. *SD* III. 167.
औत्सुक्यलक्षणम्—cf. *DR* IV. 32; *SD* III. 159.
निद्रालक्षणम् = *DR* IV. $23^{ab}$; cf. *SD* III. 157.
St. 45—*DRA* gives this illustration.
अपस्मारलक्षणम् = *DR* IV. $25^{ab}$; cf. *SD* III. 153.
St. 46—*DRA* and *SD* give this illustration.
सुप्तलक्षणम् = *DR* IV. $22^{cd}$; cf. *SD* III. 152 (*svapnaḥ*).
विबोधलक्षणम् = *DR* IV. $24^{ab}$; cf. *SD* III. 151.
St. 49—*DRA* and *SD* give this illustration.
अमर्षलक्षणम् = *DR* IV. $18^{ab}$; cf. *SD* III. 156.

St. 51—*DRA* gives this illustration.
अवहित्थालक्षणम् = *DR* IV. $29^{ab}$; cf. *SD* III. 158.
St. 52—*DRA* and *SD* give this illustration.
उग्रतालक्षणम् = *DR* IV. $15^{ab}$; cf. *SD* III. 149.
St. 53—*DRA* gives this illustration.
मतिलक्षणम् = *DR* IV. $27^{ab}$; cf. *SD* III. 163.
St. 56—*DRA* gives this illustration.
व्याधिलक्षणम् = *DR* IV. $29^{cd}$; *SD* III. $164^{ab}$.
St. 57—*DRA* gives this illustration.
उन्मादलक्षणम् = *DR* IV. $30^{ab}$; cf. *SD* III. 160.
St. 59—*DRA* gives this illustration.
अथ मरणं etc.—cf. *DR* IV. $21^{ab}$; *SD* III. $155^{ab}$.
St. 60-61—*DRA* gives these illustrations.
त्रासलक्षणम्—cf. *DR* IV. $16^{cd}$; *SD* III. $164^{cd}$.
वितर्कलक्षणम्—cf. *DR* IV. $29^{ab}$; *SD* III. $171^{cd}$.
St. 63—*DRA* gives this illustration. (*KP* VII. 196).
St. 64-76—cf. *NS* VII. 99-109.
इष्टानिष्टदर्शनात् etc.—for *saṁbhrama* as a kind of *āvega*, see *DR* IV. 28 and *SD* III. 143.

**पञ्चमः परिच्छेदः**

St. 1 = *DR* IV. 1; cf. *SD* III. 1. *NS* तत्र विभावानुभावव्यभिचारिसंयोगाद्रस-निष्पत्तिः ।
St. 2 = *NS* VI. 15; *KP* IV 29; cf. *SD* III. 182 which adds to the list the ninth *rasa*, *S'ānta*.
अथ रसानां क्रमेण etc.—*NS* VI deals in detail with the eight *rasas*. Cf. *DR* IV. 48 ff.; *SD* III. 182 ff.
St. 3 = *DR* IV. 48; cf. *SD* III. 183 ff.
St. 4 = *DR* IV. 69.
St. 38—cf. *DR* IV. 75; *SD* III. 214 ff.
St. 39-46 = *NS* VI. 52-59; cf. *DR* IV. 76-77.
St. 49—cf. *DR* IV. 81-83; *SD* III. 222 ff.
St. 50—*DRA* gives this illustration.
St. 54—cf. *DR* IV. 74; *SD* III. 227 ff.
St. 55—*DRA* gives this illustration.
St. 57-58—cf. *DR* IV. 72; *SD* III. 232
St. 61—*DRA* gives this illustration.
St. 64 = *DR* IV. 80; cf. *SD* III. 235 ff.
St. 66—*DRA* and *SD* give this illustration.
St. 68—cf. *DR* IV. 73; *SD* III. 239 ff.
St. 69—*DRA* and *SD* give this illustration.

St. 71—cf. *DR* IV. $78^{cd}$–79 ; *SD* III. 242 ff.
St. 72—*DRA* and *SD* give this illustration.

## षष्ठः परिच्छेदः

*NS* XXII. 12 ff., *DR* II. 34 ff., *SD* III. 94 ff. deal with *hāva* and its verieties.

St. 1–2 = *NS* XXII. 12–13.
St. 3—cf. *NS* XXII. 14 ; *DR* II. $37^{cd}$ ; *SD* III. $97^{cd}$–$99^{ab}$.
St. 5—cf. *NS* XXII. 15 ; *DR* II. $38^{ab}$ ; *SD* III. $99^{cd}$–$100^{ab}$.
St. 8—cf. *NS* XXII. 16 ; *DR* II. $38^{cd}$ ; *SD* III. $100^{cd}$.
St. 10—cf. *NS* XXII. 17 ; *DR* II. $39^{ab}$ ; *SD* III. 104.
St. 11—*DRA* and *SD* give this illustration.
St. 12—cf. *NS* XXII. 18 ; *DR* II. $39^{cd}$ ; *SD* III. 101.
St. 14—cf. *NS* XXII. 19 ; *DR* II. $40^{ab}$ ; *SD* III. 102.
St. 16—cf. *NS* XXII. 20 ; *DR* II. $40^{cd}$ ; *SD* III. 103.
St. 18—cf. *NS* XXII. 21 ; *DR* II. $41^{ab}$ ; *SD* III. $100^{ef}$.
St. 20—cf. *NS* XXII. 22 ; *DR* II. $41^{cd}$ ; *SD* III. $105^{ab}$.
St. 21—*SD* gives this illustration.
St. 22—cf. *NS* XXII. 23 ; *DR* II. $42^{ab}$ ; *SD* III. $106^{ab}$.
St. 25–27—cf. *Abhinavabhāratī* (p. 281) ; *KP* IV. 28 ff. ; *Rasagaṅgādhara* (p. 22).
St. 28–29 = *NS* VI. 42–43.
St. 30–31—cf. *NS* VI. 33–34.
St. 32 = *NS* VI. 39 ; cf. *DR* IV. 44–45.
St. 35—cf. *SD* III. $254^{cd}$.
St. 43 = *Dhvanyāloka* III (p. 145) ; cf. *SD* III. $262^{cd}$.
St. 54 ff.—cf. *DR* IV. 45 ; *SD* III. 245 ff.
St. 59 ff.—cf. *SD* III. 4–7.

# APPENDIX I

## रसरत्नप्रदीपिकायां नामतो निर्दिष्टा ग्रन्था ग्रन्थकर्तारश्च

[Works and authors mentioned by name in the *RRP*]

(References within rectangular brackets are to the *RRP*)

ग्रन्थाः—

१. उदारराघव [IV. 40]—Two works of this name are known: 1) a poem on Rāmāyaṇa by Caṇḍīsūryakavi; 2) a poem on the life of Rāma by Śākalyamalla, otherwise known as Mallayārya and Kavimalla (cir. 1330 A.D.). The stanza cited in the *RRP* is not traced in this work. From the manner in which the stanza is cited there, it would appear that it has been borrowed from some Sanskrit play, by name *Udārarāghava*. The work is not available.

२. कादम्बरी [after IV. 60; after VI. 33]—A well-known romance in prose by Bāṇa; first half of the seventh century A. D.

३. किरातार्जुनीयम् [II. 21; IV. 56]—A *Mahākāvya* in 18 *sargas* by Bhāravi; cir. 634 A. D.

४. चण्डकौशिक [II. 15; II. 17; V. 51; V, 70]—A drama in five acts, depicting the story of Hariścandra and Viśvāmitra, by Kṣemīśvara; 9th–10th century A. D.

५. नाट्यार्णव [I. 6]—A work on dramaturgy, by Nandikeśvara, extending over 4000 stanzas; referred to by Dāmodaragupta (8th cent. A. D.) in his *Kuṭṭinīmata*.

६. नाट्यालोचन [I. 7]—Commentary on Bharata's *Nāṭyaśāstra*, by Abhinavagupta; 1013 A. D.

७. प्रबोधचन्द्रोदय [IV. 38; V. 56]—An allegorical play by Kṛṣṇamiśra; 1097–1165 A. D.

८. भावप्रकाशन [I. 7]—A work on dramatic theory by Śāradātanaya; 1175–1250 A. D.

९. मालतीमाधव [I. 4; IV. 33; IV. 37; V. 69]—A romantic play by Bhavabhūti (close of 7th century A. D.).

१०. मालविकाग्निमित्र [V. 7]—A drama by Kālidāsa—5th century A.D.

११. मेघदूत [after V. 35]—A lyrical poem by Kālidāsa.

१२. रत्नावली [IV. 10; IV. 28; IV. 44; after IV. 60; V. 10; V. 66]—A romantic play by Śrī Harṣa; 604–647 A. D.

१३. विक्रमोर्वशी [II. 11; IV. 59]—A drama by Kālidāsa.

१४. वेणीसंवरण [IV. 50; V. 55]—A play based on *Mahābhārata* by Bhaṭṭa Nārāyaṇa; cir. 840 A. D.

१५. शाकुन्तल [V. 67]—A drama by Kālidāsa.

१६. शृङ्गारसागर [I. 7]—No details are known about this work.

१७. हनुमन्नाटक [V. 60]—Also called *Mahānāṭaka* based on Rāmāyaṇa; exists in two recensions: 1) one by Dāmodara, in ten acts; this is earlier and belongs to 10th century A. D. 2) the other, which is shorter, in 9 acts, by Madhusūdana.

**ग्रन्थकर्तारः—**

१. अर्जुन [I. 6]—*Arjunabharatam* is a name borne by several works on dramaturgy; the name indicates that the author was Arjuna. A work of that name, composed by one Nāgārjuna, is now available only in fragments and treats of music only.

२. आनन्दवर्धन [I. 7]—Author of *Dhvanyāloka*; belongs to the middle of the ninth century A. D.

३. कविकंकण [II. 13; II. 19; IV. 62; V. 19; V. 59; VI. 4; VI. 7; VI. 9; VI. 17]—His works *Mṛgāṅkaśataka* and *Manovalambikā* are known from DC XX. 8008.

४. काश्यप [I. 5]—A sage quoted by Abhinavagupta and other writers as an authority on *Saṅgīta*. *Hṛdayaṁgama*, a commentary on Daṇḍin's *Kāvyādarśa*, mentions Kāśyapa and Vararuci as ancient writers on *Alaṁkāra*.

५. कोहल [I. 5]—Immediate disciple of Bharata; Kohala enlarged the eleven subjects of Bharata into thirteen. Even *Nāṭyaśāstra* refers to Kohala:

आत्मोपदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा ।
शेषं प्रस्तारतन्त्रेण कोहलः कथयिष्यते ॥

Kohala's work is lost; only one fragment, *Tālādhyāya*, is available. He seems to have improved upon Bharata in details of classification. *Abhinayaśāstram* attributed to Kohala may be part of his work or a later abridgement of it. Two epitomes on Kohala's work are known: *Dantilakohalīyam* (narrated by K. to Dantila) and *Kohalarahasyam* (narrated by K. to Mataṅga). Kohala's work appears to be narration by K. to Śārdūla.

६. गिरिसुता [I. 5]—An epitome of *Bharatārṇava* purports to be a dialogue between Nandin and Pārvatī (Girisutā).

७. तुंबरु [I. 6]—A mythical sage and a companion of Nārada.

८. दन्तिल [I. 5]—A devout immediate follower of Bharata. Like Kohala, Dantila seems to have written several treatises. His work embraced music and dancing. A commentary on his work, called *Prayogastabaka*, is known.

९. नन्दिकेश्वर–नन्दिन् [I. 5?]—First to receive initiation into the science of music from Śiva. With his name are associated works on *Kāmaśāstra* and *Saṅgīta*. *Bharatārṇava* (*Nāṭyārṇava*), containing 4000 verses, purports to be a narration of the principles by Nandin to Sumati, an actor of Indra's stage.

१०. नारद [I. 6]—Divine bard represented to be playing on *Vīṇā*. Two works, *Nāradopaniṣad* and *Nāradīyaśikṣā* (Śikṣā of Sāmaveda), are often mentioned. *Nāṭyaśāstra* mentions that Bharata took Nārada and Svātī with him when he was permitted by Brahmā to stage his first performance at *Dhvajamaha*.

११. भरत [I. 7; I. 25; II. 6; III. 2, 3, 4, 5, 6, 7, 8, 9, 11, 12, 13, 14, 15, 16, 17, 18]—The ancient sage, the author of the *Nāṭyaśāstra*, which is said to be the earliest work on music, dancing and drama. It is placed between 2nd century B. C. and 2nd century A. D.

१२. मेरीझाङ्कार [V. 65]—Nothing is known about the work of this author.

१३. मतङ्ग—Author of *Bṛhaddeśī*, which primarily deals with *deśī* music. The extant portion of the work, in six chapters, treats of *S'rutis* and *Svaras*. The Tamil epic *Silappadhikaram* mentions Mataṅga. There is a tradition that M. was the father of Kohala and Dantila.

१४. महेश [I. 5]—God Śiva, from whom has originated the science of dancing and drama.

१५. माघ [II. 25]—Author of *S'iśupālavadha*, a *Mahākāvya* in twenty cantos; belonged to the latter half of the 7th century A. D.

१६. रावण [I. 6]—He is mentioned for his views on music and dancing by later writers on the subject.

१७. विशाखिल [I. 5]—A writer on music referred to by Abhinavagupta in his *Abhinavabhāratī*.

# APPENDIX II

Illustrative stanzas from the *RRP* which are also found in *DRA*, *KP* and *SD*. The context in these works is indicated within rectangular brackets. Many of the concordances are shown also in the notes.

*RRP*

IV. 5 *KP* VII. 271 [एकभङ्गिनिर्दिष्टोऽनेकार्थः].
IV. 7 *KP* VII. 183 [वाक्यगतमविमृष्टविधेयांशत्वम्].
IV. 11 *KP* VII. 277 [साकांक्षमर्थमुदाहरति].
IV. 22 *KP* IV. 61 [संभविना वस्तुना अलंकारस्य व्यक्तिमुदाहरति].
IV. 44 *DRA* I. 39[c] ['क्रम'—सन्ध्यङ्गोदाहरणम्].
IV. 56 *SD* VII. (p. 416) [पुनरुक्तत्वम्].
IV. 58 *KP* X. 460 [तुल्ययोगिता]; *SD* III. 192[ab] [व्याधि].
IV. 59 *KP* VII. 163 and *SD* VII. (p. 387) [अविमृष्टविधेयांशत्वम्].
IV. 63 *KP* VII. 195 [समासेऽप्यनेकपदगतत्वेनास्य वाक्यदोषत्वम् इति तदुदाहरति].
V. 5 *KP* I. 1 [स्फुटालंकारविरहविशिष्टं काव्यमुदाहरति]; *SD* I (p. 15) [क्वचिदस्फुटालंकारत्वे उदाहृतम्].
V. 7 *DRA* IV. 48 [कलाविभावः].
V. 10 *DRA* III. 4 [रङ्गं प्रसाद्य मधुरैः etc.]; *KP* VII. 330 [न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित्]; *SD* VII. 29 [क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः].
V. 12 *KP* VII. 310 and *SD* VII. 26 [न्यूनपदं क्वचिद् गुणः].
V. 14 *DRA* IV. 61 [साम].
V. 15 *SD* III. 267 [भावशान्ति].
V. 18 *KP* IV. 34 [ईर्ष्याहेतुकम्]; *SD* III. 58 [माने मृदुः].
V. 22 *KP* VII. 266 [लोकविरुद्धस्यापि कविप्रसिद्धत्वेन न विरुद्धत्वम्]; *KP* X. 479 [सामान्येन विशेषस्य समर्थनं साधर्म्येणोदाहरणम्].
V. 23 *DRA* II. 27 [अभिसारिका].
V. 29 *DRA* II. 16 [कामवती].
V. 30 *KP* IV. 33 [विरहहेतुकमुदाहरति].
V. 32 *KP* IV. 112 [अनुग्राह्यानुग्राहकैकव्यञ्जकानुप्रवेशरूपयोः संकरयोरुदाहरणम्]; *SD* II. 11 [लक्षणा].
V. 35 *KP* IV. 100 [विप्रलम्भशृङ्गार].
V. 47 *DRA* IV. 75 [आत्मस्थो हास्यः].
V. 48 *DRA* IV. 75 [परस्थो हास्यः]; *SD* VI. 259 [वाक्केलि].
V. 55 *DRA* III. 9–10 [कथोद्घात]; *DRA* IV. 74 [रौद्ररस]; *SD* VI. 83[ab] [उपक्षेप].

V. 60 *KP* IV. 40 [वीररस].

V. 63 *SD* X. 61–62$^{ab}$ [कारणसाधर्म्येण कार्यसमर्थनम्].

V. 66 *DRA* II. 59$^{cd}$ [अवपात]; *SD* III. 44 [अन्तःपुरसहायाः]; *SD* III. 235 [भयानकरस].

V. 67 *KP* IV. 41 [भयानकरस].

V. 69 *KP* IV. 42 [बीभत्सरस]; *SD* VII. 16 [रौद्रे रसे दुःश्रत्वोदाहरणम्].

VI. 23 *DRA* II. 19 [रतौ सावहित्थादरा]; *SD* III. 62$^{cd}$–63$^{ab}$ [उदासीनस्त्री].

VI. 24 *DRA* II. 50 [वचोहास्यनर्म].

VI. 38 *KP* VII. 254 [अमतपरार्थता]; *SD* III. 155$^{ab}$ [मरण]; *SD* VII. 7 [अमतपरार्थता].

VI. 46 *KP* IV. 48 [रसाभास].

VI. 48 *DRA* II. 7 [अनेकासु नायिकास्वपि न स्नेहानुपपत्तिः]; *SD* III. 35$^{cd}$ [अनेकासु नायिकासु तुल्यानुरागो दक्षिणनायकः].

VI. 52 *KP* X. 430 [शाब्दीं अपह्नुतिं उदाहरति].

VI. 53 *KP* X. 426 [अश्लिष्टं मालारूपं परंपरितं रूपकमुदाहरति].

VI. 57 *KP* IV. 44 [शान्तरस].

# APPENDIX III

## रसरत्नप्रदीपिकायामुदाहृतानां पद्यानां सूचिः

| | *RRP* | मूलम् |
|---|---|---|
| अंसाकृष्टदुकूलया | V. 24 | कर्णोत्पलस्य [शार्ङ्गधर. ३६७४] |
| अकरोत्तृणमिव जीवं | V. 59 | कविकंकणस्य |
| अङ्गैरन्तर्निहितवचनैः | V. 7 | मालविकाग्निमित्र २।८ |
| अच्छिन्नं नयनांबु | IV. 57 | अमरु. ११० |
| अज्ञानेन पराङ्मुखी | IV. 13 | अमरु. १७ |
| अनुनयमगृहीत्वा व्याजसुप्ता | IV. 47 | शिशुपालवध ११।९ |
| अन्यत्र व्रजतीति का | V. 30 | [का. प्र. ४।३४] |
| अन्यासु तावदतिमर्द॰ | IV. 31 | विकटनितम्बायाः |
| अयं कण्ठः कुठारस्ते | V. 62 | हनुमन्नाटक १।३९ |
| अयं पापो यावन्न | IV. 50 | वेणीसंवरण ३।४५ |
| अयि जीवितनाथ जीवसी॰ | V. 50 | कुमारसंभव ४।३ |
| अरे सीताचोर त्रिदश॰ | IV. 55 | |
| अर्थित्वे प्रकटीकृते | IV. 11 | महावीरचरित २।९ |
| अलसललित मुग्धा॰ | IV. 15 | उत्तररामचरित १।२४ |
| अवाप्तः प्रागल्भ्यं परिणत॰ | VI. 52 | [का. प्र. १०।४३०] |
| अव्यक्तवर्णानि मनोहराणि | II. 13 | कविकंकणस्य |
| अहौ वा हारे वा | VI. 57 | वैराग्यशतक १०९ |
| आकर्ण्य गर्जितं घोरं | IV. 62 | कविकंकणस्य |
| आकर्ण्य संगरमहार्णव॰ | II. 19 | कविकंकणस्य |
| आकुंच्याग्रं नखविलिखने | VI. 17 | कविकंकणस्य |
| आगच्छागच्छ सज्जं कुरु | IV. 35 | धनिकस्य द. रू. अ. ४।२८ |
| आयातासि विमुञ्च | III. 22 | सु. र. भा. ४७।३५३ |
| आयाते दयिते मरुस्थल॰ | IV. 34 | अद्भुतपुण्यस्य |
| आलानं जयकुञ्जरस्य | VI. 53 | [का. प्र. १०।४२६] |
| आश्लिष्टभूमिं रसितारमुच्चै॰ | IV. 46 | शिशुपालवध ३।७२ |
| इंदीवरेण नयनं | V. 14 | शृंगारतिलक ३ |
| ईषद्वक्रितपक्ष्मपंक्तिभि॰ | V. 9 | |
| उत्कृत्योत्कृत्य कृत्तिं | V. 69 | मालतीमाधव ५।१६ |
| उत्कृत्योत्कृत्य गर्भानपि | IV. 53 | महावीरचरित २।४७ |
| उरसि निहितस्तारः | V. 23 | अमरु. ३१ |
| एकत्रासनसंस्थितिः परिहृता | VI. 23 | अमरु. २३ |
| एतत्करालकरवालनिकृत्त॰ | V. 56 | प्रबोधचन्द्रोदय ३।१३ |
| एतैस्त्वं परुषाक्षरैः | IV. 54 | |
| एवमालि निगृहीतसाध्वसं | IV. 36 | कुमारसंभव ८।५ |

| | | |
|---|---|---|
| एवंवादिनि देवर्षौ | IV. 52 | कुमारसंभव ६।८४ |
| औत्सुक्येन कृतत्वरा | V. 10 | रत्नावली १।२ |
| किंचिद्वक्रितकंठकंदल० | V. 28 | श्रृंगारतिलक १।२६ |
| किं लोभेन विलंघितः | IV. 63 | [द. रु. ४।२९] |
| किं शोचामि मदेकबान्धव० | II. 15 | चण्डकौशिक ४।२ |
| कोशान्सौधेषु मुञ्चन् | V. 65 | भेरीझाङ्कारस्य |
| क्षुद्राः संत्रासमेनं विजहत | V. 60 | हनुमन्नाटक १।१२ |
| गतप्राया रात्रिर्हिमवति | V. 52 | |
| गते प्रेमाबन्धे प्रणय० | VI. 45 | अमरु. ४३ |
| गतं तिरश्चीनमनूरु० | II. 25 | शिशुपालवध १।२ |
| गाढालिङ्गनवामनीकृत० | V. 12 | अमरु. ४० |
| गुरुतरकलनूपुरानुनादं | VI. 21 | शिशुपालवध ७।१८ |
| गौडं राष्ट्रमनुत्तमं निरुपमा | IV. 38 | प्रबोधचन्द्रोदय २।७ |
| ग्रामतरुणं तरुण्याः | III. 25 | [का. प्र. १।३] |
| ग्रीवाभङ्गाभिरामं मुहु० | V. 67 | शाकुन्तल १।७ |
| चलति कथंचित्पृष्टा | IV. 16 | धनिकस्य–द. रू. अ. ४।२७ |
| चलत्कुचं व्याकुल० | V. 25 | [शार्ङ्गधर. ३६९८] [सु.र.भा. ३२०।८] |
| चिररतिपरिखेदप्राप्त० | IV. 49 | शिशुपालवध ११।१३ |
| चैलांचलं न्यस्य कुचांचलेन | V. 8 | |
| जातं मे परुषेण भस्म० | V. 47 | [द. रू. ४।१०८] |
| तव सा कथासु परि० | VI. 15 | शिशुपालवध ९।६४ |
| तीक्ष्णाक्षिप्तशराग्रभिन्न० | IV. 29 | |
| तीव्राभिषंगप्रभवेन | IV. 20 | कुमारसंभव ३।७३ |
| तीव्रः स्मरसंतापः | IV. 44 | रत्नावली ४।२३ |
| तेऽन्यैर्वान्तं समश्नन्ति | II. 23 | |
| त्यजत मानमलं बत | V. 6 | रघुवंश ९।४७ |
| दूराद्दवीयो धरणीधराभं | IV. 9 | महावीरचरित २।१ |
| देव्याः संततबाष्पवारि० | V. 37 | |
| दोर्दण्डाञ्चितचन्द्रशेखर० | V. 72 | महावीरचरित १।५४ |
| द्रष्टव्या दयितेति | III. 23 | |
| द्रष्टुं न क्षमते न च प्रिय० | III. 26 | |
| धन्यासि या कथयसि | IV. 22 | विज्जिकायाः [सा. द. ३।६० ] |
| धात्रीजनांकशतदुर्ललितं | V. 51 | चण्डकौशिक ५।४ |
| धीरं वारिधरस्य वारि० | V. 33 | अमरु. १३ |
| न भिक्षा दुर्भिक्षे मिलति | IV. 43 | |
| न यत्र प्रत्याशामनु० | IV. 37 | मालतीमाधव ९।८ |
| नवजलधरः सन्नद्धोयं | IV. 59 | विक्रमोर्वशीय ४।१ |
| नष्टं वर्षधरैर्मनुष्य० | V. 66 | रत्नावली २।३ |
| नायास्तासि महीभृता | V. 19 | |
| निद्रानिमीलतदृशो मद० | IV. 45 | बिल्हणस्य (द. रू. ४।८५) |
| निरानन्दः कौन्दे मधुनि | IV. 26 | सु. र. भा. ९४।२२३ |

| | | |
|---|---|---|
| विनिश्चेतुं शक्यो न | IV. 21 | उत्तररामचरित १।३५ |
| विमुंचामुं मानं सफलय | VI. 40 | चन्द्रकस्य [शार्ङ्गधर. ३५६५] |
| विरचय कुचयोः | V. 20 | |
| विलोलचरणस्खलन्मुखर० | IV. 40 | |
| वृद्धोऽन्धः पतिरेष | IV. 17 | [भोजप्रबन्ध २५५] |
| शान्तिः कुतस्तस्य | IV. 33 | मालतीमाधव ६।१ |
| शान्ते मन्मथसंगरे | V. 13 | [शार्ङ्गधर. ३७०३] |
| शृङ्गारी गिरिजानने | VI. 42 | शृङ्गारतिलक १।१ |
| शृङ्गारः कलकूजितेषु | VI. 34 | |
| श्रुत्वाऽऽयातं बहिः | VI. 11 | धनिकस्य–द. रू. अ. २।३ |
| श्लिष्यति कामपि चुम्बति | VI. 47 | गीतगोविन्द १।४।७ |
| संप्राप्तेवधिवासरे क्षणममुं | IV. 61 | सु. र. भा. ७५।२९० |
| सहसा विदधीत न क्रियां | IV. 56 | किरातार्जुनीय २।३० |
| सा पत्युः प्रथमापराध० | V. 18 | अमरु. २९ |
| सालक्तकेन नवपल्लव० | V. 17 | अमरु. ११६ |
| सुतनु विजहि मौनं | V. 15 | अमरु. ३९ |
| सुसितवसनालंकरायां | V. 22 | [का. प्र. ७।२६६] |
| स्तुमः कं वामाक्षि | VI. 46 | [का. प्र. ४।४८] |
| स्थाणुमालिङ्गति स्वप्ने | IV. 23 | |
| स्नाता तिष्ठति कुन्तलेश्वर० | VI. 48 | [द. रू. २।७] |
| स्निग्धश्यामलकान्तिलिप्त० | V. 32 | [का. प्र. ४।११२] |
| स्मरबाणलांगलाग्रैः | III. 24 | |
| स्मरमयनदीपूरेणोढा | V. 29 | अमरु. १०४ |
| स्मर्यते स हि वामोरु | IV. 25 | |
| स्मेरास्यां स्मरफुल्लगण्ड० | V. 11 | |
| हारो नारोपितः कण्ठे | V. 31 | हनुमन्नाटक ५।२५ |
| हावहारि हसितं | IV. 14 | शिशुपालवध १०।१३ |
| हित्वा नर्मकथां सखी० | VI. 7 | कविकंकणस्य |
| हृन्मर्मभेदिपतदुत्कटकंक० | IV. 60 | महावीरचरित १।३९ |
| हं हो मारुतनन्दनादिश | V. 36 | महानाटक ६।५ |
| ह्रिया सर्वस्यासौ | IV. 10 | रत्नावली ३।४ |

# भारतीय विद्या ग्रन्थावलि

## प्रकाशित ग्रन्थसूचि

१ विसुद्धिमग्ग–बुद्धघोषाचार्यकृत पालीभाषामय महाग्रन्थ — मू०
संपादक–अध्यापक श्रीयुत धर्मानन्द कोसंबी — १२–०–०

२ भरतेश्वर बाहुबली रास–गुजराती भाषाग्रथित प्राचीनतम पद्यकृति
संपापक–आचार्य श्री जिनविजय मुनि — ०–८–०

३ ज्ञानदीपिका–देवबोधाचार्यकृत महाभारत उद्योगपर्वव्याख्या
संपादक–डॉ. एस्. के. दे, एम्. ए. पीएच्. डी. ढाका युनिवर्सिटी — ३–०–०

४ भगवद्गीता भारतीयदर्शनानि च–भगवद्गीता सम्बन्ध विषयक
षड्दर्शन स्वरूप निरूपक १० संस्कृत व्याख्यान
व्याख्याता–म० म० अनन्त कृष्णशास्त्री, कलकत्ता युनिवर्सिटी — २–१२–०

५ गुजराती स्वरव्यञ्जनप्रक्रिया–प्रो. एल्. टर्नरकृत आंग्लभाषा निबन्धा-
नुवाद (गूर्जरभाषा, नागरी लिपि)
अनुवादक–अध्यापक श्रीयुत केशवराम का. शास्त्री — १–४–०

६ चन्द्रलेखा–रुद्रदास कविकृत अभिनव सट्टक ग्रन्थ
संपादक–डॉ. ए. एन्. उपाध्ये, एम्. ए. डी. लिट्. — ६–०–०

७ वेदवादद्वात्रिंशिका–सिद्धसेन दिवाकर कृत, महार्थपूर्ण प्रौढ काव्यकृति
संपादक एवं विवेचक–पं० सुखलालजी शास्त्री. — ०–१२–०

# *भारतीय विद्या*

[ भारतीय पुरातन साहित्य, इतिहास, स्थापत्य, तत्त्वज्ञान, भाषाशास्त्रादि विविधविषयक
प्रौढ संशोधनात्मक निबन्धप्रकाशिका हिन्दी–गुजराती त्रैमासिक पत्रिका ]

संपादक–**आचार्य श्री जिनविजय मुनि**

१ प्रथम भाग ( संवत् १९९६–९७ पृष्ठ सं० ४६० ) — मू. ५–०–०
२ द्वितीय भाग ( संवत् १९९८–९९ पृष्ठ सं० ५०० ) — मू. ५–०–०
३ तृतीय भाग ( संवत् १०००–२००१ पृष्ठ सं० ४५० ) — मू. ५–०–०

[ स्व० बाबू श्रीबहादुर सिंहजी सिंघी स्मृति ग्रन्थ ]

# सिंघी जैन ग्रन्थमाला

## अद्यावधि मुद्रित ग्रन्थ

| | | |
|---|---|---|
| १ | प्रबन्धचिन्तामणि, मेरुतुङ्गाचार्य विरचित. | ३-१२-० |
| २ | पुरातन प्रबन्ध संग्रह. (संस्कृतभाषामय, अज्ञातकर्तृक, ऐतिह्य तथ्यपूर्ण) | ५-०-० |
| ३ | प्रबन्धकोश, राजशेखरसूरिरचित. | ४-०-० |
| ४ | विविधतीर्थकल्प, जिनप्रभसूरिकृत. | ४-४-० |
| ५ | देवानन्दमहाकाव्य, मेघविजयोपाध्यायविरचित. | २-१२-० |
| ६ | जैनतर्कभाषा, यशोविजयोपाध्यायकृत. | २-०-० |
| ७ | प्रमाणमीमांसा, हेमचन्द्राचार्यकृत. | ५-०-० |
| ८ | अकलङ्कग्रन्थत्रयी, भट्टाकलङ्कदेवकृत. | ५-०-० |
| ९ | प्रबन्धचिन्तामणि, संपूर्ण एवं उत्तम हिन्दी भाषान्तर. | ३-१२-० |
| १० | प्रभावकचरित, प्रभाचन्द्रसूरिरचित. | ५-०-० |
| ११ | भानुचन्द्रगणिचरित, सिद्धिचन्द्रोपाध्यायरचित. | ५-०-० |
| १२ | ज्ञानबिन्दुप्रकरण, यशोविजयोपाध्यायविरचित. | ३-८-० |
| १३ | बृहत् कथाकोश, हरिषेणाचार्यकृत. | १२-०-० |
| १४ | जैनपुस्तकप्रशस्तिसंग्रह, प्रथम भाग. [illegible]यलिखित ताडपत्रीय पुस्तकोंकी अपूर्व ऐतिहासिक प्रशस्तियोंका अभिनव संग्रह | ६-८-० |
| १५ | धूर्ताख्यान, हरिभद्रसूरिरचित. | ५-८-० |
| १६ | दिग्विजयमहाकाव्य, मेघविजयोपाध्यायविरचित. | ५-१२-० |
| १७ | रिष्टसमुच्चय, दुर्गदेवकृत. | ७-८-० |
| १८ | सन्देशरासक, कवि अब्दुल रहमानकृत. (अपभ्रंशभाषामय विप्रलम्भशृङ्गारविषयक अपूर्व रासा काव्य) | ७-८-० |

— प्राप्तिस्थान —

**भारतीय विद्या भवन**

चोपाटी रोड, बंबई ७.